॥ श्रीः ॥

# ॥ योगसूत्रम् ॥

श्रीमद्भगवत्पतञ्जलिप्रणीतम् ॥

महामहोपाध्यायश्रीमदनन्तदेवज्ञतकाशिकराजकीय-

प्रधानपाठालयपदवीपरीक्षोपयुक्तयोग-

चन्द्रिकाभिधव्याख्यया सहितम् ॥

तत्पाठालयाध्यक्षवरश्रीयुतहाक्सारथिवीसाहेब-

महाशयानुज्ञया तत्रत्याध्यापकेन

द्विवेदहरिनाथशर्मणा

पठनपाठनाद्युपयुक्तटिप्पण्या समलङ्कृत्य, संस्कृत्य

श्रीशिवचन्द्रसिंहेन

दानापुरस्थ सेन्ट्रलप्रेसनामके यन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

संवत् १९४०

प्रथम बार १०००]  [मूल्य ।) आना

॥ श्रीः ॥

# ॥ योगसूत्रम् ॥

श्रीमद्भगवत्पतञ्जलिप्रणीतम् ॥

महामहोपाध्यायश्रीमदनन्तदेवकृतकाशिकराजकीय-
प्रधानपाठालयपदवीपरीक्षोपयुक्तयोग-
चन्द्रिकाभिधव्याख्यया सहितम् ॥

---

तत्पाठालयाध्यक्षवरश्रीयुतडाक्तरथिबोसाहेब-
महाशयानुज्ञया तत्रत्याध्यापकेन
द्विवेदहरिनाथशर्मणा
पठनपाठनाद्युपयुक्तटिप्पण्या समलङ्कृत्य, संस्कृत्य

श्रीशिवचन्द्रसिंहेन
दानापुरस्थ सेन्ट्रलप्रेसनामके यन्त्रालये
मुद्रयित्वा प्रकाशितम् ।

संवत् १९४०

॥ श्रीः ॥

# सचन्द्रिकयोगसूत्रस्य

## प्रथमः पादः ॥

अथ योगानुशासनम् ॥ १ ॥ योगश्चित्तवृत्तिनिरोधः ॥ २ ॥

[1] तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥ वृत्तिसारूप्यमितरत्र ॥ ४ ॥

वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ॥ ५ ॥

---

गुरुं प्रणम्य सूत्रार्थचन्द्रिका क्रियते मया ।

अनन्तेनेश्वरप्रीत्यै सच्चिदानन्दरूपिणम् ॥ १ ॥

अथ शब्दोऽधिकारवाची योगो नाम समाधानम् । अनुशिष्यते व्याख्यायते येन तत् ॥ १ ॥ सत्त्वपरिणामरूपस्य चित्तस्य या वृत्तयस्तासां निरोधो बहिर्मुखताविच्छेदादन्तर्मुखतया स्वकारणे लयः ॥ २ ॥ तस्मिन्समाधिनिरोधकाले द्रष्टुः पुरुषस्य स्वरूपे चिन्मात्रे अवस्थानं स्थितिर्भवति ॥ ३ ॥ इतरत्र योगादन्यस्मिन् काले वक्ष्यमाणलक्षणवृत्तिभिः सारूप्यं तद्रूपत्वम् ॥ ४ ॥ चित्तस्य परिणामविशेषाः पञ्चमिताः क्लेशैराक्रान्ताः, तद्भिन्नाः ॥ ५ ॥

---

[1] चित्तपदं व्याचष्टे । तदेति सूत्रद्वयेन । ततश्च यस्मिन्नेकाग्रतया परिणते स्वरूपे प्रतिष्ठितो भवति यस्मिंश्च विषयाकारतया परिणते तदाकार इव भवति पुरुषो यथा चलत्सु जलतरङ्गेषु चलचन्द्रस्तच्चित्तमिति सूत्रद्वयस्य पर्यवसितोऽर्थः ॥

प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥ प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥ विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥ शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥ अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥ अनुभूतविषयासंप्रमोषः स्मृतिः ॥ ११ ॥ [1] अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥

---

एताः पञ्च वृत्तयः तासां व्याख्या सूत्राणि ॥ ६ ॥ [2] बाह्यवस्तुनि इन्द्रियद्वारेण चित्तस्योपरागादर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षम् । अनुमानं नाम गृहीतसंबन्धाद्धेतोः पक्षे साध्यस्य सामान्यात्मना निश्चयः । आप्तस्य ईश्वरस्य वाक्यं वेदः ॥ ७ ॥ अतथाभूतेऽर्थे तथोत्पद्यमानं ज्ञानं विपर्ययः संशयोऽपि अतद्रूपप्रतिष्ठत्वान्मिथ्याज्ञानम् ॥ ८ ॥ शब्दजज्ञानानुपतनशीलः वस्तुनस्तथात्वमनपेक्षमाणो निश्चयो विकल्पः ॥ ९ ॥ अभावप्रत्यय आलम्बनं यस्या वृत्तेः सा निद्रा ॥ १० ॥ अनुभूतस्य विषयस्य योऽयमसंप्रमोषः संस्कारद्वारेण बुद्धावारोहः सा स्मृतिः ॥ ११ ॥ वक्ष्यमाणलक्षणाभ्यामभ्यासवैराग्याभ्यां चित्तवृत्तीनां यत्प्रतिहननं स निरोधः ॥ १२ ॥

---

१ सप्तभिः सूत्रैः सलक्षणवृत्तिभेदादिनिरूपणेन वृत्तिपदं व्याख्याय सोपायं निरोधपदार्थमाह । अभ्यासेति पञ्चभिः ॥

२ स्पष्टत्वात्सूत्रमव्याख्यायापि प्रसिद्धत्वात्सूत्रकारेणावशिष्टमपि प्रत्यक्षादिलक्षणं मन्दबुद्धिज्ञानसौकर्य्याय पूरयति । बाह्येति । प्रमाणसामान्यलक्षणं तु अविसंवादि विज्ञानं प्रमाणमिति ॥

तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥ स तु दीर्घकालनैरन्तर्य्य-सत्कारसेवितो दृढ़भूमिः ॥ १४ ॥ दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥ तत् परं पुरुषख्यातेर्गुणवैतृ-ष्ण्यम् ॥ १६ ॥ [1] वितर्कविचारानन्दास्मितानुग [2] मात्संप्र-ज्ञातः ॥ १७ ॥

---

वृत्तिरहितस्य चित्तस्य स्वरूपनिष्ठः परिणामः स्थितिः, तस्यां यत्न उत्साहः पुनःपुनस्तथात्वेन चेतसि निवेशनमभ्यासः ॥ १३ ॥ बहुकालं नैरन्तर्य्येणादरातिशयेन च सेव्यमानो दृढ़भूमिः स्थिरो भवति ॥ १४ ॥ इहोपलभ्यमानः शब्दादिर्देवलोकादावानुश्रविकः, तयोः परिणा-मविषयत्वदर्शनाद्विगतेच्छस्य वशीकारसञ्ज्ञा वैराग्यमुच्यते ॥ १५ ॥ गुणवैतृष्ण्यरूपमुत्कृष्टं वैराग्यं[3] पुरुषविवेकख्याते [4] र्भवति ॥ १६ ॥ वित-र्कादिचतुष्टयभेदेन [5] सम्यक् प्रकर्षेण ज्ञायते भाव्यस्य रूपं येन सः [6] ॥ १७ ॥

---

[1] समाधिं विभजते । वितर्केति द्वाभ्याम् । तत्र सवितर्कसविचारसानन्दसास्मितभेदे-न संप्रज्ञातसमाधिश्चतुर्विध इति प्रथमस्य सूत्रस्य सुस्पष्टोऽर्थः ॥

[2] रूपानुग । पा० २ ॥

[3] एतदेव निरोध पदेन समाधिपदेन वा व्यवह्रियते ॥

[4] गुणेभ्यः पुरुषस्य यो विवेकस्तस्य ख्यातेरुत्पादादित्यर्थः ॥

[5] संप्रज्ञातशब्दस्याचरार्थमाह । सम्यगिति ॥

[6] चतुर्विध इति शेषः ॥

विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः [1] ॥ १८ ॥ [2] भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥ श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञापूर्व्वक इतरेषाम् ॥ २० ॥ तीव्रसंवेगानामासन्नः ॥ २१ ॥ मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ २२ ॥

विरम्यतेऽनेन स चासौ प्रत्ययश्च तस्याभ्यासः पुनःपुनश्चेतसि निवेशनं तत्पूर्वं यस्य तादृशः संस्कारशेषः असंप्रज्ञात इत्यर्थः। तत्र या का चिद्वृत्तिरुल्लसति तस्या नेतिनेतीतिश्रुत्या निरासः कार्यः। तत्र व्युत्थानाद्याः संस्काराः समाधिप्रारम्भाद्यैः संस्कारैर्हन्यन्ते ॥ १८ ॥ विदेहप्रकृतिलयानां वितर्कादीनां समाधिः भवप्रत्ययः संसार एव कारणं यस्य [3] ॥ १९ ॥ अन्येषां श्रद्धादिपूर्वकः, चेतसः प्रसाद उत्साहः स्मृतिरेकाग्रता प्रविवेकः एतत्पूर्वको भवति। सविकल्पसमाधेरभ्यासाद्गुणवैतृष्ण्यरूपाद्वैराग्याद-संप्रज्ञातः ॥ २० ॥ संस्कारस्तीव्रो येषां तेषां समाधिलाभः शीघ्रं भवति ॥ २१ ॥ मृद्वादिसंवेगभेदाद्योगिनोऽपि भिन्नाः [4] तेषां समाधिलाभो दीर्घकालादिभेदेन भवतीत्यर्थः ॥ २२ ॥

१ विशेषोऽन्यः। पा० २ ॥

२ संक्षेपत उक्तानपि कात्स्नर्येन विस्तरेणोपपादयितुमारभते। भवेत्यादिना ग्रन्थेन। तत्राधिकारिभेदेन भिन्नान् समाधिलाभोपायांस्तावद्विशदयति पञ्चभिः ॥

३ विदेहानां प्रकृतिलयानां च समाधिलाभो जन्मनैव कारणान्तरनिरपेक्ष इति स्पष्टोऽर्थः ॥

४ मृदूपाया मृदुसंवेगा मध्यसंवेगास्तीव्रसंवेगाश्च। एवं मध्योपाया अधिमात्रोपायाश्चेति नवेत्यर्थः ॥

ईश्वरप्रणिधानाद्वा ॥२३॥ क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥२४॥ तत्र निरतिशयं सर्वज्ञबीजम्[1] ॥२५॥ स एष पूर्वेषामपि[2] गुरुः कालेनानवच्छेदात् ॥२६॥ तस्य वाचकः प्रणवः ॥२७॥ तज्जपस्तदर्थभावनम् ॥२८॥

---

सुगमोपायोऽयं भक्तिविशेषः ईश्वरे सर्वक्रियाणामर्पणं वा ॥२३॥ अविद्यादयः क्लेशाः, कर्माणि जात्यायुर्भोगाः, आफलविपाकात् चित्ते शेरत इत्याशया वासनास्ताभिर्न संस्पृष्टः अन्येभ्यः पुरुषेभ्यो विशिष्टः, ईशनशीलः ॥२४॥ तस्मिन्भगवति सर्वज्ञत्वस्य यद्बीजं सर्वस्य मूलत्वाद्बीजमिव बीजं तत्र निरतिशयं काष्ठां प्राप्तम्[3] ॥२५॥ स ब्रह्मादीनामपि गुरुरुपदेष्टा[4] यतः स कालेन नावच्छिद्यते अनादित्वात्, तेषां पुनरादिमत्त्वादस्ति कालेनावच्छेदः ॥२६॥ सुगमोपायमाह। ईश्वराभिधायक ओंकारः ॥२७॥ तस्य प्रणवस्य जपः प्रणववाच्यस्य ईश्वरस्य भावनं पुनःपुनश्चेतसि निवेशनमेकाग्रतया उपायः[5] ॥२८॥

---

१ सर्वज्ञत्वबीजम् । पा० २ ॥

२ स सर्वेषामपि । पा० २ ॥

३ तथा च ज्ञानादयश्चित्तधर्मास्तारतम्येन परिदृश्यमाना यत्र निरतिशयपरत्वमासीदन्ति स ईश्वर इति तत्र प्रमाणं दर्शितम् ॥

४ एतेनेश्वरस्य प्रभावः प्रदर्शितः ॥

५ एतेनेश्वरोपासनं प्रदर्शितम् ॥

ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥ २९ ॥ व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ ३० ॥ दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ ३१ ॥ [1] तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥

तस्माज्जपात्तदर्थभावनाच्च विषयप्रातिकूल्येन अञ्चति याटक् प्रत्तिस्तस्या अधिगमो ज्ञानं भवति वक्ष्यमाणान्तरायप्रत्तिप्रतिबन्धश्च भवतीत्यर्थः [2] ॥ २९ ॥ व्याधिर्ज्वरादिः, स्त्यानमकर्मण्यता, उभयकोट्यालम्बनं विज्ञानं संशयः, प्रमादोऽनवधानता, आलस्यं कायचित्तयोर्गुरुत्वम्, अविरतिर्विषयासक्तिः, भ्रान्तिदर्शनं विपर्ययज्ञानम्, अलब्धभूमिकत्वं समाधिभूमेरलाभः, अनवस्थितत्वं चित्तस्य समाधावप्रतिष्ठा, एते नव विघ्नानीत्युच्यन्ते ॥ ३० ॥ तत्र दुःखं चित्तस्य राजसः परिणामो बाधनलक्षणः, दौर्मनस्यं करणैः सह मनसो दौस्थ्यम्, अङ्गमेजयत्वं सर्वाङ्गवेपथुः, प्राणो यत्र बाह्यवायुमाचामति स श्वासः, यत्कोष्ठ्यं वायुं निश्वसिति स प्रश्वासः, एते विक्षेपैः सह भवन्तीति अभ्यासवैराग्याभ्यां निरोद्धव्याः ॥ ३१ ॥ तेषां विक्षेपाणां निषेधार्थं कस्मिंश्चिदभिमते तत्त्वे अभ्यासः ॥ ३२ ॥

१ सोपद्रवविक्षेपनिराकरणस्योपायान्तरमाह । तदिति ॥
२ एतेनेश्वरोपसनायाः फलं प्रदर्शितम् ॥

[1] मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥ ३३ ॥ प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥ [2] विषयवती वा प्रवृत्तिरुत्पन्ना स्थितिनिबन्धिनी ॥ ३५ ॥

---

मैत्रीं सौहार्दं सुखितेषु, करुणां कृपां दुःखितेषु, मुदितां हर्षं पुण्यवत्सु, उपेक्षाम् औदासीन्यमपुण्यवत्सु भावयेत्, एवं मैत्र्यादिपरिकर्मणा चित्तं प्रसीदति रागद्वेषनिरासे सुखेन समाधेः प्रादुर्भावो भवत्येकाग्रता च ॥ ३३ ॥ प्रच्छर्दनं नाम कोष्ठ्यस्य वायोः प्रयत्नविशेषाद्बहिर्निःसारणं विधारणं मात्राप्रमाणेन प्राणस्यायामो गतिविच्छेदः ॥ ३४ ॥ विषया दिव्यगन्धाद्या विद्यन्ते फलत्वेन यस्यां सा संविन्मनसः स्थैर्यं करोतीत्यर्थः ॥ ३५ ॥

---

१ इदानीं चित्तस्य समाधियोग्यतासंपत्तिलक्षणसंस्कारोपयोगीनि बाह्यानि परिकर्माणि विशदयति । मैत्रीत्यादिसप्तभिः । तत्र रागद्वेषयोरेव प्राधान्येन चित्तविक्षेपहेतुतया तयोः समूलमुन्मूलने प्रशान्तमनसो भविष्यत्येव चित्तस्यैकाग्रतेति प्रथमस्य भावः । द्वितीयस्य तु सर्वासामिन्द्रियवृत्तीनां प्राणवृत्त्यधीनत्वात्तन्निग्रहमभ्यस्यतः सुकर एवेन्द्रियवृत्तिनिग्रह इति । यद्वा दुष्टेन्द्रियवृत्तीनां पापप्रयोज्यतया पापनाशं प्रति सकलागमसिद्धहेतुभावेन तेन कारणविघटनद्वारैव सूपपादः कार्यानुत्पाद इति तात्पर्यम् ॥

२ उपायप्रदर्शनमुखेनोपेयस्य संप्रज्ञातसमाधेर्भूमिकामपि प्रदर्शयति । विषयेति द्वाभ्याम् । एते च रागद्वेषादिविलयादुत्तरकालोत्पत्तिके वेदितव्ये । मनसः स्थितिनिबन्धिनीतिपाठो भाष्यसम्मतोऽपि भोजराजकतवृत्त्यसम्मतः ॥

विशोका वा ज्योतिष्मती ॥ ३६ ॥ [1] वीतरागविषयं वा चित्तम् ॥ ३७ ॥ स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥ यथाभिमतध्यानाद्वा [2] ॥ ३९ ॥ परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ४० ॥

ज्योतिःशब्देन सात्त्विकः प्रकाश उच्यते सोऽतिशयवान् यस्यां सा ज्योतिष्मती प्रवृत्तिरुत्पन्ना विशोका विगतशोका सुखमयसत्त्वाभ्यासवशाच्चेतःस्थितिकर्त्री ॥ ३६ ॥ परित्यक्तविषयाभिलाषं चित्तं मनसः स्थितिनिबन्धनं भवतीति ॥ ३७ ॥ प्रत्यस्तमितबाह्यवृत्तेर्मनोमात्रेणैव यत्र भोक्तृत्वमात्मनः स स्वप्नः। निद्रा तदालम्बनं ज्ञानं चेतसः स्थितिहेतुः ॥ ३८ ॥ यथाभिमतवस्तुनि बाह्ये आभ्यन्तरे नाडीचक्रादौ वा भाव्यमाने चेतसः स्थितिहेतुर्भवति ॥ ३९ ॥ एभिश्चित्तस्थैर्य्यं भावयतो योगिनः सूक्ष्मभावनद्वारेण परमाण्वन्तो वशीकारः परमाणुपर्यन्ते सूक्ष्मे आकाशादिस्थूले चेतसोऽप्रतिघातो भवति [3] ॥ ४० ॥

१ उपायप्रदर्शनद्वारेणैव संप्रज्ञातसमाधिविषयमुपक्षिपति। वीतेति द्वाभ्याम् ॥ स्वप्ननिद्रालम्बनं वेतिपाठो भाष्यासम्मतोऽपि भोजराजकृतवृत्तिसम्मतः कस्मिंश्चित्पुस्तक उपलभ्यते। चन्द्रिकापि तदनुसारेण सुयोजेति बोध्यम् ॥

२ अयंभावः प्रथममेव विविधविषयव्याप्तचेतस ईश्वरप्रणिधानाद्यसंभवेन यथाभिमते वस्तुन्येव चेतसः स्थैर्याभ्यासः संभवति अभ्यस्तचित्तस्थैर्येण च सुकर एवेश्वरप्रणिधानादिर्न पुनरसद्विषयानुध्यानस्य समाधिलाभोपायत्वमिति ॥

३ एतेन फलं प्रदर्शितम् ॥

क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु[1] तत्स्थतदञ्जनतासमापत्तिः ॥ ४१ ॥ [2]शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः ॥ ४२ ॥ स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ ॥

क्षीणा वृत्तयो यस्य तस्य चेतसः स्फटिकमणेरिव ग्रहीतृग्रहणग्राह्येषु तत्स्थं तदेकाग्रता, तदञ्जनता तन्मयत्वं तद्रूपपरिणामो भवतीत्यर्थः ॥ ४१ ॥ शब्दः, अर्थो जात्यादिः, ज्ञानं बुद्धिवृत्तिः, विकल्पः एते यस्यां भासन्ते सा सवितर्का ॥ ४२ ॥ शब्दार्थस्मृतिप्रविलये स्पष्टग्राह्याकारप्रतिभासतया स्वरूपशून्या इव निर्वितर्का समापत्तिः ॥ ४३ ॥

१ अस्मितेन्द्रियविषयेषु । भूमिकाक्रमेण तु ग्राह्यग्रहणग्रहीतृष्विति बोद्धव्यम्, यतः प्रथमं ग्राह्यनिष्ठस्ततो ग्रहणनिष्ठस्ततोऽस्मितामात्ररूपो ग्रहीतृनिष्ठस्समाधिरिति ॥

२ पूर्वं सम्प्रज्ञातासंप्रज्ञातभेदेन समाधेर्द्वैविध्यं सवितर्कादिभेदेन च संप्रज्ञातसमाधिचातुर्विध्यं प्रत्यपादि, इदानीन्तु तमेव समाधिं समापत्तिपदेन, तद्भेदौ च सबीजनिर्बीजपदाभ्यां, संप्रज्ञातसमाधिभेदांश्चतुरः सवितर्कनिर्वितर्कसविचारनिर्विचारपदैश्च व्यवहरन्नुपसंहरंश्च समाधिपादं, तल्लक्षणं फलं विषयं च प्रदर्शयितुमुपक्रमते । शब्देत्यादिना पादान्तेन ग्रन्थेन । ततश्च सानन्दसास्मितयोरेव पूर्वोक्तयोः समाध्योर्निर्वितर्कनिर्विचारपदाभ्यां क्रमेण व्यवहार इति स्पष्टं भवति ॥

एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता[1] ॥४४॥ सूक्ष्मविषयत्वं चालिङ्गपर्यवस्थानम् ॥ ४५ ॥ [2] ता एव सबीजः समाधिः ॥ ४६ ॥ [3] निर्विचारवैशारद्ये अध्यात्मप्रसादः ॥ ४७ ॥ [4] ऋतम्भरा तत्र प्रज्ञा ॥ ४८ ॥

एतयैव सवितर्कया निर्वितर्कया, सविचारा निर्विचारा च व्याख्याता, सूक्ष्मतन्मात्रेन्द्रियादिर्विषयो यस्याः सा, पूर्वा स्थूलविषया ॥ ४४ ॥ सविचारनिर्विचारयोः समापत्त्योर्यत्सूक्ष्मविषयत्वं तदलिङ्गपर्यवसानं, न क्वचिल्लीयते न वा किं चिल्लिङ्गति गमयतीत्यलिङ्गं प्रधानं तत्पर्यन्तं सूक्ष्मविषयत्वम् ॥ ४५ ॥ ता एवोक्तलक्षणाः समापत्तयः सह बीजेनावलम्बनेन वर्त्तत इति सबीजः संप्रज्ञातसमाधिरुच्यत इत्यर्थः सर्वासां सालम्बनत्वात् ॥ ४६ ॥ निर्विचारायाः प्रकृष्टाभ्यासवशाद्वैशारद्ये नैर्मल्ये सति अध्यात्मप्रसादः समुपजायते, चित्तस्यैतदेव वैशारद्यं कियत् स्थितौ दार्ढ्यम् ॥ ४७ ॥ ऋतं सत्यं बिभर्ति कदाचिदपि न विपर्ययेणाच्छाद्यते सा ऋतम्भरा तस्मिन्सति भवति, तस्माच्च प्रज्ञालोकात्सर्वं यथावत्पश्यन्योगी प्रकृष्टं योगं प्राप्नोति ॥ ४८ ॥

---

१ एतत्तुल्यन्यायेनैव सविचारा निर्विचारा च बोद्धव्येत्यर्थो नत्वेतद्रूपैव सेति तात्पर्य्यम् ॥

२ उक्तानां समापत्तीनां प्रकृते प्रयोजनमाह । ता एवेति ॥

३ अन्यासां समापत्तीनां निर्विचारसमापत्तिफलकत्वान्निर्विचारायाः फलमाह । निर्विचारेति ॥

४ चित्तवैशारद्यस्य फलमाह । ऋतम्भरेति ॥

[1]श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ ४९ ॥ [2]तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥ [3]तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ ५१ ॥

॥ इति पतञ्जलि सूत्रे योगशास्त्रे प्रथमः पादः ॥

श्रौतमागमज्ञानम्, अनुमानमुक्तलक्षणं ताभ्यां या जायते प्रज्ञा सा सामान्यविषया, इयं निर्विचारवैशारद्यसमुपेता ताभ्यां विलक्षणा विशेषविषयत्वात्, अस्यां हि सूक्ष्मव्यवहितविप्रकृष्टा विषयाः स्फुटं भासन्ते अतस्तस्यां यत्नो विधेयः ॥ ४९ ॥ तया प्रज्ञया जनितो यः संस्कारः सोऽन्यान् व्युत्थानजान् समाधिजांश्च संस्कारान् प्रतिबध्नाति ॥ ५० ॥ तस्यापि निरोधे तस्य संप्रज्ञातस्य निरोधे प्रविलये सति सर्वासां चित्तवृत्तीनां स्वकारणे प्रविलयाद्या संस्कारमात्रादृत्तिरुदेति तस्यां नेतिनेतीति पर्युदसनान्निर्बीजः समाधिराविर्भवति यस्मिन्सति पुरुषः शुद्धो भवति ॥ ५१ ॥

॥ इति योगचन्द्रिकायां प्रथमः पादः ॥

1 श्रौतानुमानप्रज्ञाभ्याम् उक्तप्रज्ञायां वैलक्षण्यमाविष्करोति । श्रुतेति ॥
2 अनुपदोक्तप्रज्ञायाः फलमाह । तज्ज इति ॥
3 इदानीं मुख्यमसंप्रज्ञातसमाधिमाह । तस्यापीति ॥

तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १ ॥ [1] समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥ अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः [2] ॥ ३ ॥ [3] अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥ ४ ॥

समाहितचित्तस्य योगमभिधाय व्युत्थितचित्तस्य योगः कथं सिद्ध्यतीति तत्साधनप्रतिपादनाय क्रियायोगमाह। तपः कृच्छ्रादि, स्वाध्याय ओंकारपूर्वकमन्त्राणां जप; सर्वक्रियाणां समर्पणमेतानि क्रियायोगः ॥१॥ उक्तलक्षणसमाधिभावनार्थो वक्ष्यमाणक्लेशशिथिलीकरणार्थश्च ॥ २॥ वक्ष्यमाणलक्षणा अविद्यादयस्तापं जनयन्तः क्लेशशब्दवाच्या भवन्ति ॥ ३ ॥ अविद्या अनात्मन्यात्माभिमानः सा क्षेत्रं प्रसवभूमिरुत्तरेषामस्मितादीनां प्रत्येकं सुप्तादिभेदेन चतुर्विधानां, तत्र ये क्लेशाश्चित्तभूमौ स्थिताः प्रबोधाभावे स्वकार्यं नारभन्ते ते प्रसुप्ताः, तनवः सूक्ष्माः [4], विच्छिन्नाः परस्परमितरोत्कर्षे उच्छिन्नाः[5], ये स्वं स्वं कार्यमभिनिर्वर्त्तयन्ति ते उदारास्तेषाम् ॥ ४ ॥

---

१ उक्तक्रियायोगस्य फलमाह। समाधीति ॥

२ पञ्च क्लेशा इति भाष्यसंमतः पाठः ॥

३ चतुर्णामितरेषामविद्यामूलकत्वं प्रत्येकं चतुर्विधत्वं च स्पष्टयत्यविद्येति ॥

४ स्वप्रतिपक्षभावनया शिथिलीकृतकार्यसंपादनशक्तयः ॥

५ बलवता क्लेशेनाभिभूतशक्तयः ॥

अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥५॥ दृग्दर्शनशक्त्योरेकात्मतेवास्मिता[१] ॥६॥ सुखानुशयी[२] रागः ॥७॥ दुःखानुशयी द्वेषः ॥८॥ स्वरसवाही विदुषोऽपि तन्वनुबन्धोऽभि[३] निवेशः ॥९॥

---

अतस्मिंस्तदिति प्रतिभासोऽविद्येत्यविद्यालक्षणम्, घटकायदुःखशरीरेषु नित्यशुचिसुखात्मत्वाभिमानः अविद्या ॥५॥ दृक्शक्तिः पुरुषो दर्शनशक्तिरन्तःकरणस्य सात्त्विकः परिणामस्तयोर्भोक्तृभोग्यत्वेन भिन्नत्वेऽपि एकताभिमानोऽस्मिता ॥६॥ सुखमनुशेत इति सुखानुशयी रागः सुखसाधने गर्द्धः सोऽयं रागलक्षणः क्लेशः ॥७॥ उक्तलक्षणदुःखाभिज्ञस्यानुस्मृतिपूर्वकं तत्साधनेष्वनभिलाषिता निन्दात्मको द्वेषलक्षणः क्लेशः ॥८॥ पूर्वजन्मानुभूतवासनाबलाज्जायमानो मरणदुःखानुभवः शरीरादिभिर्मम वियोगो माभूदिति सर्वेषामभिनिवेशः ॥९॥

---

१ वस्तुतः कर्त्तृत्वाद्यभाववति कर्त्तृत्वादिप्रकारको विपर्ययविशेषोऽस्मितेति तात्पर्यार्थः । अस्मितादीनां क्लेशसाधनत्वात् क्लेशशब्दवाच्यता, अविद्यायास्तु एतत्सर्वकारणत्वात् ॥

२ सुखानुस्मरणपूर्वकः । गर्द्ध इति चाचिष्यते । गर्द्धश्चाविशेषात्सुखविषयकस्तत्साधनविषयको वा स एव राग इति फलितार्थः । एवमुत्तरसूत्रस्थ.ष्यनभिलाष इत्याद्याचिष्यार्थोऽवगन्तव्यः ॥

३ विदुषोऽपि तथा रूढोऽभीति भाष्यवाचस्पत्यसंमतः पाठः ॥

[1]ते प्रतिप्रसवहेयाः सूक्ष्माः ॥१०॥ ध्यानहेयास्तद्वृत्तयः[2] ॥११॥ [3]क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥ १२ ॥ सति मूले तद्विपाको जात्यायुर्भोगाः[4] ॥ १३ ॥

ते सूक्ष्माः क्लेशाः प्रतिलोमपरिणामेन हेयास्त्यक्तव्याः ॥ १० ॥ तेषां वृत्तयः सुखाद्यास्ता ध्यानेन चित्तैकाग्र्येण हेयाः ॥ ११ ॥ अविद्यादिक्लेशमूला वासना अस्मिन् जन्मनि अनुभवनीया जन्मान्तरे वा ॥ १२ ॥ अविद्यादौ सति कर्मणां विपाकः फलं जात्यायुर्भोगाः, ब्राह्मणत्वादिर्जातिः, चिरकालं कायसंबन्ध आयुः, भोगा विषयाः ॥ १३ ॥

१ सर्वेषामुक्तक्लेशानां द्वैविध्यं प्रहाणोपायद्वयं च व्यवस्थितमाह। ते इति द्वाभ्याम्। सूक्ष्मा इत्यस्य वासनारूपतयाऽवस्थिता इत्यर्थः ॥

२ तेषामारब्धकार्याणां क्लेशानां स्थूलानामिति यावत् सुखदुःखमोहात्मिका वृत्तय इत्यर्थः। आभ्यां सूत्राभ्यां स्थूलक्लेशानां स्वल्पायासपरिहार्यत्वं सूक्ष्माणां च महायासपरिहार्यत्वं फलितम् ॥

३ क्लेशानां स्वरूपादिकमुक्त्वा कर्माशयस्य तत्प्रदर्शयितुमाह। क्लेशेति। तत्र कर्माशय इति स्वरूपं प्रदर्शितं कर्मणां वासनात्मकत्वात्। क्लेशमूल इत्यनेन तु कारणं दर्शितं सर्वेषां कर्मणामविद्यादिमूलकत्वात्। दृष्टादृष्टेत्यनेन तु फलं प्रदर्शितमिति विवेकः ॥

४ सञ्चितकर्मवासना विपाकं प्राप्य जात्याद्यात्मकं स्वीयं कार्यं जनयन्तीति तात्पर्यार्थः ॥

१ ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥ परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥ १५ ॥ हेयं दुःखमनागतम् २ ॥ १६ ॥

ते पूर्वोक्ताः पुण्यापुण्यहेतुत्वात् ह्लादपरितापौ सुखदुःखे तत्फला भवन्ति । एतच्च सर्वसाधारणम् ॥ १४ ॥ योगिनस्तु ज्ञातक्लेशादिविवेकस्य सकलमेव भोगसाधनं परिणामतापसंस्कारदुःखैः सविषान्नवदादावन्ते मध्ये भोगकालेऽपि प्रतिकूलवेदनीयमेव ॥ १५ ॥ भूतस्य व्यतिक्रान्तत्वादनुभूयमानस्य च त्यक्तुमशक्यत्वादनागतमेव संसारदुःखं हातव्यम् ॥ १६ ॥

१ तेषां जात्यादीनां पुण्यकर्मवासनापरिपाकजन्मनां ह्लादजनकत्वं पापकर्मवासनापरिपाकजन्मनां तु परितापजनकत्वं, परं विवेकिनामैकान्तिकात्यन्तिकदुःखनिवृत्तिमीहमानानां सत्कर्मवासनापरिपाकोत्पन्नजात्यादयोऽपि परितापफला एव न ह्लादफला इति स्पष्टयति । त इति द्वाभ्याम् । तत्रोत्तरसूत्रे परिणामदुःखेन तापदुःखेन संस्कारदुःखेन गुणवृत्तिविरोधाच्च सर्वमेव दुःखमित्यन्वयः । परिणामदुःखमुपभुज्यमानविषयसजातीयाभिलष्यमाणविषयाऽप्राप्तिदुःखम् । तापदुःखमुपभुज्यमानसुखसाधनपरिपन्थिविषयकद्वेषदुःखम् । संस्कारदुःखं विषयसंनिधानजनितसुखादिजन्यानवस्थितसंस्कारसंवेद्यं दुःखम् । गुणवृत्तिविरोधः सत्त्वरजस्तमसां सुखदुःखमोहात्मिका या वृत्तयस्तासां परस्परमभिभाव्याभिभावकभावः । इदमत्र तात्पर्यं सत्कर्मवासनापरिपाकफलसुखानुभवकालेऽपि पूर्वोक्तदुःखानामनुच्छेदात्तान्यपि दुःखसंस्पृष्टतया दुःखान्येवेति ॥

२ अनागतदुःखहानिस्तु दुःखस्य सामग्रीविघटनद्वारा प्रागभावपरिरक्षणम् ॥

द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥ प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥ १८ ॥ [1] विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥ [2] द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ २० ॥

द्रष्टा चिद्रूपः पुरुषो दृश्यं बुद्धितत्त्वम्, तयोर्विवेकाख्यातिपूर्वको योऽसौ संयोगो भोक्तृभोग्यत्वेन सन्निधानं स हेयस्य दुःखस्य संसारस्य हेतुः कारणम् ॥ १७ ॥ दृश्यस्य स्वरूपं कार्यं प्रयोजनं चाह । प्रकाशेति । प्रकाशः सत्त्वरूपः, क्रिया प्रवृत्तिरूपा रजः, स्थितिर्नियमरूपा तम, एतद्रूपम् । भूतानीन्द्रियाणि आत्मा स्वरूपं यस्य कार्यमुक्तम् ॥ भोगोऽपवर्गः संसारनिवृत्तिस्तावर्थः प्रयोजनं यस्य दृश्यस्य ॥ १८ ॥ गुणानां पर्वाणि अवस्थाविशेषाश्चत्वारोज्ञातव्याः, विशेषा भूतेन्द्रियाणि, अविशेषास्तन्मात्रान्तःकरणं, लिङ्गमात्रं बुद्धिः, अलिङ्गमव्यक्तम्, अव्यक्तस्य सर्वत्रान्वयित्वेन ज्ञानादवश्यं ज्ञातव्यानि ॥ १९ ॥ द्रष्टृस्वरूपमाह । द्रष्टा पुरुषो दृशिस्वरूपश्चेतनामात्रस्वरूपः स शुद्धोऽपि प्रत्ययानुपश्यः, प्रत्यया विषयोपरक्तज्ञानानि तानि अनुपश्यतीति, अव्यवधानेन सन्निधानमात्रेण बुद्धावुपरागे सति पुरुषस्य द्रष्टृत्वमिति ॥ २० ॥

१ दृश्यपरिणामरूपाणान्तदवस्थानामज्ञातानां हातुमशक्यत्वात्प्रथमन्तद्बुधानाय तदवस्थाश्चतस्रो बोधयति । विशेषेति । गुणेत्यस्य सत्त्वरजस्तमसामवस्था इत्यर्थः ॥

२ हेयं निरूप्योपादेयं निरूपयति । द्रष्टेति ॥

तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥ [1]कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥ [2] स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ २३ ॥ [3] तस्य हेतुरविद्या ॥ २४ ॥ [4]तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम् ॥ २५ ॥

उक्तलक्षणस्य दृश्यस्यात्मा स्वरूपं तदर्थः पुरुषभोक्तृत्वसम्पादनमेव प्रयोजनमस्य ॥ २१ ॥ यद्यपि विवेकख्यातिपर्यन्ताद्भोगसंपादनात्कमपि कृतार्थं पुरुषं प्रति तन्नष्टं, तथापि सर्वपुरुषसाधारणत्वादन्यान्प्रत्य-नष्टव्यापारमवतिष्ठते, अतस्तदविनाशित्वादेकमुक्तौ न सर्वमुक्तिप्रसङ्गः॥२२॥ स्वशक्तिर्दृश्यस्वभावः स्वामिशक्तिर्द्रष्टुः स्वरूपं तयोर्द्वयोर्या स्वरूपोपलब्धिस्तस्याः कारणं यः संयोगः स च स्वरूपान्नातिरिक्तो नित्यव्यापकयोः संयोगादिसम्बन्धासंभवाद्भोक्तृभोग्यरूपः स्वरूपसम्बन्ध एव ॥ २३ ॥ या पूर्वोक्ता अविद्या सा तस्य संयोगस्य हेतुर्भवति ॥ २४ ॥ तस्या ज्ञानेनोन्मूलिताया अविद्याया योऽभावस्तस्मिन्सति तत्कार्यसंयोगस्याप्यभावः तदेव तद्धानं तद्दृशेः पुरुषस्य कैवल्यमिति ॥ २५ ॥

१ ननु दृश्यस्य पुरुषभोगसंपादनमात्रफलकतया संपादितपुरुषभोगस्य तस्य प्रयोजनाभावादेव व्यापारविरतौ सर्वेषां पुरुषाणां युगपत् तया बन्धराहित्यात्संसारस्यैवोच्छेदप्रसङ्ग इत्याशङ्कयाह। कृतार्थमिति ॥

२ दृश्यद्रष्टारौ निरूप्य तयोः संबन्धं निरूपयति। स्वेति। संयोग इत्यस्य संयोग इव दृश्यद्रष्टृस्वरूपः संबन्ध इत्यर्थः ॥

३ संयोगस्य कारणमाह। तस्येति ॥

४ तद्धानमाह। तदिति। तद्दृशेरित्यस्य स्थाने तद्व्यपदेश इति पाठं भवदेवो मन्यते॥

[1] विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥ तस्य सप्तधा[2] प्रान्तभूमौ प्रज्ञा ॥ २७ ॥ [3] योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥ २८ ॥

पुरुषगुणभेदविवेकस्य या ख्यातिः प्रख्या अविप्लवा विगतोऽन्तरा व्युत्थानरूपो विप्लवो यस्याः सा हानस्य दृश्यपरित्यागस्योपायः ॥ २६ ॥ विवेकख्यातेः स्वरूपमाह । तस्योत्पन्नविवेकज्ञानस्य ज्ञातव्यविवेकरूपा प्रज्ञा सा प्रान्तभूमौ सालम्बनसमाधिभूमिपर्यन्तं सप्तप्रकारा भवति, ते प्रकारा ज्ञातं मया ज्ञेयमित्यादयः ॥ २७ ॥ वक्ष्यमाणयोगाङ्गानुष्ठानादाविवेकख्यातेरशुद्धिक्षये चित्तसत्त्वावरणरूपाऽशुद्धिक्षये या ज्ञानदीप्तिः सात्त्विकः परिणामो विवेकख्यातिपर्यन्तः स तस्याः ख्यातेर्हेतुः ॥ २८ ॥

१ एतावता प्रबन्धेन संयोगस्य रूपं कारणं कार्यं चाभिहितम्, अथहानोपायकथनद्वारोपादेयोपादानकारणमाह । विवेकेति । हानोपाय इत्यस्य दृश्यहानोपाय इत्यर्थः । विनिवृत्तकर्त्तृत्वाद्यभिमानाया अभिभूतरजस्तमोमलाया अन्तर्मुखबुद्धेश्चिच्छायासंक्रान्तिर्विवेकख्यातिस्तस्यां च सत्यां भवत्येव कैवल्यमिति तस्या उपादेयोपादानत्वं सिद्धमेवेति बोध्यम् ॥

२ ज्ञातं मया ज्ञेयं न ज्ञातव्यं किञ्चिदास्ते १ क्षीणा मे क्लेशा न मे क्षेतव्यमस्ति २ ज्ञानमधिगतं मया ३ लब्धा मया विवेकख्याति ४ रिति चतुःप्रकारा कार्यविमुक्तिः । चरितार्था मे बुद्धिः १ कृताधिकारा गुणा गिरिशिखरनिपतिता ग्रावाण इव न पुनः स्थितिं यास्यन्ति २ सात्मीभूतो मे समाधिस्तस्मिंश्च सति स्वरूपमात्रनिष्ठोऽहमिति ३ त्रिप्रकारा चित्तविमुक्तिस्तान्सप्त प्रकारानाह । सप्तधेति । तस्येत्यस्योत्पन्नविवेकख्यातेरित्यर्थः । प्रान्तभूमिप्रज्ञा । पाठोऽयं भाष्ये भावागणेशवृत्तौ च ॥

३ विवेकख्यातेरुत्पत्तौ निमित्तमाह । योगाङ्गेति । ज्ञानदीप्तिरुत्तरोत्तरवर्द्धमानः सात्त्विकः परिणामः ॥

यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि [1] ॥ २९ ॥ अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ॥ ३० ॥ एते जातिदेशकाल [2] समयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ३१ ॥ शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ ३२ ॥

कानि तानि योगाङ्गानीत्यपेक्षायां तान्याह। यमनियमेति सूत्रेण। तेषां व्याख्या अग्रिमसूत्राणि ॥ २९ ॥ तानि क्रमेण दर्शयति। अहिंसेत्यादिना। तत्र प्राणवियोगहेतुर्व्यापारो हिंसा तदभावोऽहिंसा। सत्यं वाङ्मनसयोर्यथार्थत्वम्। अस्तेयं परस्वापहरणाभावः। ब्रह्मचर्यमुपस्थसंयमः। अपरिग्रहो भोगसाधनानामस्वीकरणमेते पञ्च यमाः ॥ ३० ॥ तेषां विशेषमाह। एतइति। जातिर्ब्राह्मणत्वादिः, देशस्तीर्थादिः, कालश्चतुर्दश्यादिः, समयो ब्राह्मणप्रयोजनादिरेतैरनवच्छिन्ना अहिंसादयः सार्वभौमा महाव्रतमित्युच्यन्ते सर्वासु चित्तभूमिषु भवाः ॥ ३१ ॥ शौचं द्विधा मृज्जलादिभिर्बाह्यमान्तरं मैत्र्यादिभिश्चित्तप्रसादनं सन्तोषस्तुष्टिः शेषाः प्राग्व्याख्याता, एते नियमाः ॥ ३२ ॥

1 एष्वङ्गेषु धारणादीन्यन्तरङ्गाण्यङ्गानि, यमादीनि तु हिंसादिवितर्कोन्मूलनद्वारा समाधेरङ्गानि। एतेषां च पूर्वपूर्वस्योत्तरोत्तरोपकारकत्वमपि बोध्यम् ॥

2 ते तु जातिदेशकाल। पा०क०। जाति देशकाल। पा०क०। तत्राहिंसादीनां जात्यवच्छेदो ब्राह्मणं न हनिष्यामीत्यादिः, देशावच्छेदस्तीर्थे न हनिष्यामीत्यादिः, कालावच्छेदश्चतुर्दश्यां न हनिष्यामीत्यादिः, समयावच्छेदो देवाद्यर्थव्यतिरेकेण न हनिष्यामीत्यादिः, अनवच्छेदो न हनिष्यामीत्यादिः ॥

वितर्कबाधने प्रतिपक्षभावनम् ॥ ३३ ॥ वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्[1] ॥ ३४ ॥ अहिंसाप्रतिष्ठायां तत्संनिधौ वैरत्यागः[2] ॥ ३५ ॥ सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥ ३६ ॥

---

कथमेषां योगाङ्गत्वमित्याह । वक्ष्यमाणवितर्कादिप्रतिपक्षभावने सति योगः सुकरो भवति, एते वितर्कादिबाधकाः ॥ ३३ ॥ के वितर्का-दयत आह । पूर्वोक्तहिंसाद्या वितर्कादयः कृतकारितानुमोदितभेदेन त्रिधा । कारणमाह । लोभक्रोधमोहपूर्वका इति, पुनस्त्रैविध्यं मृदुमध्याधिमात्राः, तेषां फलमाह । दुःखाज्ञानानन्तफलाः ॥ ३४ ॥ तेषां यमनियमादीनामभ्यासोत्कर्षाद्याः सिद्धयो भवन्ति ता आह । तत्संनि-धाविति । तस्याऽहिंसां भावयतः संनिधौ सहजविरोधिनामप्यहि-नकुलादीनां वैरत्यागः ॥ ३५ ॥ सत्याभ्यासोत्कर्षस्य फलमाह । सत्येति । सत्यप्रतिष्ठायां यागादिक्रियाफलाश्रयत्वं नाम अकृत्वापि यागादिक्रि-यास्तद्वचनादन्यस्यापि स्वर्गादिफलदानसामार्थ्यमायाति । किंपुनः स्वस्य वक्तव्यम् ॥ ३६ ॥

---

१ वितर्कादीनां स्वरूपं भेदं कारणं प्रकारं फलं च क्रमेण दर्शयति वितर्केति । तत्र हिंसादय इति स्वरूपस्य प्रदर्शनं, कृतकारितानुमोदितेति भेदस्य, लोभक्रोधमोहेति कारणस्य, मृद्विति प्रकारस्य, दुःखेति फलस्य ॥

२ अहिंसाप्रतिष्ठायामिति क्वचिन्नापि दृश्यते ॥

अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ॥ ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ॥ ३८ ॥ अपरिग्रहस्थैर्ये जन्मकथंतासंबोधः ॥ ३९ ॥ शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः ॥ ४० ॥ १ सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च ॥ ४१ ॥

अस्तेयं यदाऽभ्यस्यति योगी तदा तस्य प्रकर्षान्निरभिलाषस्यापि तस्य सर्वतो रत्नान्युपतिष्ठन्ति ॥ ३७ ॥ यः किल ब्रह्मचर्यमभ्यस्यति तस्य तत्प्रकर्षान्निरतिशयं वीर्यं सामर्थ्यमाविर्भवति । वीर्यनिरोधो हि ब्रह्मचर्यं तस्य प्रकर्षाच्छरीरेन्द्रियमनःसु वीर्यं प्रकर्षमागच्छति ॥ ३८ ॥ साधनपरिग्रह एव परिग्रहो न किं तु शरीरपरिग्रह एव परिग्रहस्तस्मिन्सति बहिर्मुखवृत्तौ न प्रज्ञोद्भवः, अपरिग्रहस्थैर्ये जन्मकथन्ता कथमित्यस्य भावः कथन्ता जन्मनः कथन्ता तस्याः सम्बोधः सम्यग्ज्ञानं जन्मान्तरे कोऽहमासमित्यादि सर्वं जानातीत्यर्थः ॥ ३९ ॥ यः किल शौचं भावयति तस्य कारणपर्यालोचनात्स्वाङ्गेष्वपि जुगुप्सा घृणा जायते नात्राग्रहः कायोऽशुचित्वात्तस्य परैः कायवद्भिः सह संसर्गाभाव उपजायते ॥ ४० ॥ शौचफलमाह । सत्त्वं प्रकाशात्मकं तस्य शुद्धीरजस्तमोभ्यामनभिभवः, सौमनस्यं मानसी प्रीतिः, ऐकाग्र्यं चेतसः स्थैर्यम्, इन्द्रियजयो विषयपराङ्मुखत्वेनात्मन्यवस्थापनमात्मदर्शने चित्तस्य समर्थत्वमेते क्रमेण प्रादुर्भवन्ति ॥ ४१ ॥

१ शौचस्यैव फलान्तरमाह । सत्त्वेति । स्वैकाग्र्यतेन्द्रिय । पा० २ ॥

सन्तोषादनुत्तमसुखलाभः ॥ ४२ ॥ कायेन्द्रियसिद्धिरशुद्धिक्ष-
यात्तपसः ॥ ४३ ॥ स्वाध्यायादिष्टदेवतासंप्रयोगः ॥ ४४ ॥
समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥ स्थिरसुखमासनम्
॥ ४६ ॥ १ प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥ ४७ ॥

---

सन्तोषफलमाह। सन्तोषप्रकर्षे योगिनस्तथाविधमान्तरं सुखमाविर्भवति यस्य बाह्यसुखं शतांशेनापि न समम् ॥ ४२ ॥ तपसः फलमाह। तपः समभ्यस्यमानं चेतसः क्लेशादिलक्षणाशुद्धिक्षयद्वारेण कायेन्द्रियाणां सिद्धिमुत्कर्षमादधाति, इन्द्रियाणां सूक्ष्मव्यवहितादिदर्शनसामर्थ्यं कायस्याणुत्वमहत्त्वादि यथेच्छं संपद्यते ॥ ४३ ॥ स्वाध्यायफलमाह। मन्त्रजपादिलक्षणे स्वाध्याये प्रकृष्यमाणे इष्टया देवतया संप्रयोगः सा देवता प्रत्यक्षा भवतीत्यर्थः ॥ ४४ ॥ ईश्वरप्रणिधानफलमाह। ईश्वरे योऽयं भक्तिविशेषस्तस्मात् समाधेराविर्भावो भवति, यस्मात्स ईश्वरः प्रसन्नः सन्नन्तरायक्लेशानपहृत्य समाधिमुद्बोधयति ॥ ४५ ॥ आसनमाह। आस्यतेऽनेनेति आसनं पद्मासनादि। तद्यदा स्थिरं निष्कम्पं सुखमनुद्वेजनीयं तदा योगाङ्गम् ॥ ४६ ॥ उपायमाह। तदासनं प्रयत्नशैथिल्येनाक्लेशेनाकाशगतानन्तसमापत्त्या च स्थिरम्, अनन्तआनन्त्येतिपाठद्वये अर्थद्वयं, प्रथमपाठे शेषसमापत्तिः, द्वितीये आकाशसमापत्तिः ॥ ४७ ॥

---

१ आसनस्थिरत्वसुखत्वयोः कारणमाह। प्रयत्नेति ॥

ततो द्वन्द्वानभिघातः ॥ ४८ ॥ तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥ स तु बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ॥ ५० ॥ बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥ ततः क्षीयते प्रकाशावरणम् ॥ ५२ ॥ धारणासु च योग्यता मनसः ॥ ५३ ॥

---

फलमाह। तस्मिन्नासनजये सति योगी द्वन्द्वैः शीतोष्णादिभिर्नाभिहन्यत इति ॥ ४८ ॥ आसनस्थैर्ये सति प्राणायामोऽनुष्ठेयः श्वासप्रश्वासयोर्गतिविच्छेदलक्षणः, विच्छेदो धारणम् ॥ ४९ ॥ तस्यैव विभज्य रूपं कथयति। स तु बाह्यवृत्ती रेचकोऽन्तर्वृत्तिः पूरकोऽन्तःस्तम्भवृत्तिः कुम्भकस्त्रिविधोऽयं देशेन द्वादशाङ्गुलप्रमाणेन, कालेन षट्त्रिंशन्मात्रादिना, सङ्ख्यया इयतो वारान् कृत इति भेदेनोपलक्षितो दीर्घसूक्ष्मसञ्ज्ञो भवति ॥ ५० ॥ त्रीन् प्राणायामानभिधाय चतुर्थमाह। बाह्येति। द्वादशान्तादिर्बाह्यो हृदयादिरान्तरस्तौ द्वावाक्षिप्य पर्यालोचयतः स्तम्भो भूयोगतिविच्छेदः स चतुर्थः पूर्वस्मादेतस्य निरोध एव विशेषः ॥ ५१ ॥ फलमाह। तस्मात्प्राणायामात् प्रकाशचित्तसत्त्वगम्यं यदावरणं क्लेशरूपं तत्क्षीयत इत्यर्थः ॥ ५२ ॥ फलान्तरमाह। वक्ष्यमाणा धारणास्तासु प्राणायामैः क्षीणदोषं मनो यत्र धार्यते तत्र स्थिरं भवति न विक्षेपं भजते ॥ ५३ ॥

स्वस्वविषयसंप्रयोगाभावे चित्तस्य [1] स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५४ ॥ ततः परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥

इति पातञ्जले सूत्रे योगशास्त्रे द्वितीयः साधनपादः ॥ २ ॥

प्रत्याहारमाह। इन्द्रियाणां विषयाभिमुख्येन वर्त्तनं यत्तत्परित्यज्य स्वरूपमात्रेऽवस्थानम्। इन्द्रियाणि स्वविषयेभ्यः प्रतीपमाह्रियन्तेऽस्मिन्निति प्रत्याहारः, तस्मिन्सति इन्द्रियाणि चित्तस्वरूपमात्रानुकारीणि सन्ति ॥ ५४ ॥ प्रत्याहारफलमाह। अभ्यस्यमाने हि प्रत्याहारे तथा वश्यान्यायत्तानीन्द्रियाणि संपद्यन्ते यथा बाह्यविषयाभिमुखतां नीयमानान्यपि न यान्तीत्यर्थः। तदेवं पादार्थो यमादिभिः प्राप्तबीजभाव आसनादिभिरङ्कुरितः प्रत्याहारेण कुसुमितो ध्यानधारणासमाधिभिः फलिष्यतीत्यर्थः ॥ ५५ ॥

इति योगचन्द्रिकायां द्वितीयः साधनपादः ॥ २ ॥

[1] स्वविषयासंप्रयोगे चित्तस्य। पा० २ ॥

[1] देशबन्धश्चित्तस्य धारणा ॥ १ ॥ तत्र प्रत्ययैकतानता[2] ध्यानम् ॥ २ ॥ तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥ [3] त्रयमेकत्र संयमः ॥ ४ ॥

धारणामाह ॥ देशे नाभिचक्रादौ चित्तस्य बन्धो विषयान्तरपरिहारेण यत् स्थिरीकरणं सा चित्तस्य धारणेत्युच्यते, यमनियमासनप्राणायामप्रत्याहारसिद्ध्युत्तरं निर्बाधे देशे ऋजुकायेन जितद्वन्द्वेन संप्रज्ञातसमाधेरभ्यासाय चेतसः स्थिरीकरणं कर्त्तव्यम् ॥ १ ॥ ध्यानमाह । तत्र तस्मिन्देशे यत्र चित्तं धृतं तत्र प्रत्ययस्य ज्ञानस्य या एकतानता विसदृशपरिणामपरिहारद्वारेण यदेव धारणायामालम्बनीकृतं तदालम्बनतयैव निरन्तरमुत्पत्तिः सा ध्यानमुच्यते ॥ २ ॥ समाधिमाह । तदेव ध्यानं यथार्थमात्रनिर्भासमर्थाकारसमावेशादुद्भूतार्थरूपं न्यग्भूतज्ञानस्वरूपत्वेन स्वरूपशून्यतामिवापद्यते स समाधिरित्युच्यते । सम्यगाधीयत एकाग्रीक्रियते यत्र मनः स समाधिः ॥ ३ ॥ योगाङ्गत्रयस्य तान्त्रिकीं सञ्ज्ञामाह । एकस्मिन्विषये ध्यानधारणासमाधिलक्षणं त्रयं प्रवर्त्तमानं संयमसञ्ज्ञया शास्त्रे व्यवह्रियते ॥ ४ ॥

१ पूर्वसूत्रोक्तेष्वङ्गेषु धारणादीनां विशेषेण स्वरूपादि दर्शयितुं प्रारभते । देशेति ॥

२ तत्र तत्प्रत्ययैकतानता--इति भवदेवसम्मतः पाठः ॥

३ तत्त्रय--इति पा० क० । स च न भाष्यभवदेवभावागणेशभोजराजसम्मतचन्द्रिकासम्मतः ॥

तज्जयात्प्रज्ञालोकः ॥ ५ ॥ तस्य भूमिषु विनियोगः ॥ ६ ॥ त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥ तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥ व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो[1] निरोधपरिणामः ॥ ९ ॥

तस्य संयमस्य जयादभ्यासेन साम्योत्पादनात् प्रज्ञाया ज्ञातव्यविवेकरूपाया आलोकः प्रसरो भवति ॥ ५ ॥ तस्योपयोगमाह । तस्य संयमस्य भूमिषु स्थूलसूक्ष्मालम्बनभेदेन स्थितासु चित्तवृत्तिषु विनियोगः कार्यः, अधरां जित्वोत्तरां जयेत् ॥ ६ ॥ पूर्वेभ्यो यमादियोगाङ्गेभ्यः पारंपर्येण समाधेरुपकारकेभ्यो धारणादि योगाङ्गत्रयं संप्रज्ञातस्य समाधेरन्तरङ्गं, समाधिस्वरूपनिष्पादनात् ॥ ७ ॥ तस्यापि समाध्यन्तरापेक्षया बहिरङ्गत्वमाह । तदपीति । निर्बीजस्य निरालम्बनस्य समाधेस्तदपि योगाङ्गत्रयं बहिरङ्गं पारंपर्येणोपकारकत्वात् ॥ ८ ॥ व्युत्थानं क्षिप्तादिभूमित्रयं निरोधः प्रकृष्टसत्त्वस्य चेतसः परिणामः, ताभ्यां जातौ यौ संस्कारौ तयोर्यथाक्रममभिभवप्रादुर्भावौ यदा भवतस्तदा निरोधलक्षणचित्तस्योभयवृत्तित्वादन्वयो यः स निरोधपरिणाम इत्युच्यते ॥ ९ ॥

१ निरोधस्य यः क्षणस्तस्मिंश्चित्तेऽन्वयोऽर्थादुक्ताभिभवप्रादुर्भावयोरेव स निरोधपरिणाम इत्युच्यत इत्यर्थः ॥

¹ तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥ ² सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११ ॥
³ शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ॥ १२ ॥

तस्य चेतस उक्तान्निरोधसंस्कारात्प्रशान्तवाहिता भवति सदृशप्रवाहपरिणामि चित्तं भवतीत्यर्थः ॥ १० ॥ चित्तस्य सर्वार्थता विक्षेपो धर्म एकाग्रतापि धर्मस्तयोर्यथाक्रमं क्षयोदयावभिभवप्रादुर्भावौ उद्रिक्तसत्त्वस्य चित्तस्याऽन्वयितयाऽवस्थानं समाधिपरिणाम इत्युच्यते, पूर्वस्मादस्यायं विशेषो व्युत्थानसंस्कारस्य न्यग्भाव उत्तरस्य निरोधसंस्कारस्योद्भव इह तु क्षयोदयाविति सर्वार्थतारूपस्य विक्षेपस्यात्यन्ततिरस्कारादनुत्पत्तिरेकाग्रतोद्भवः ॥ ११ ॥ समाहितचित्तस्यैको वृत्तिविशेषः शान्तोऽपरस्तूदितो वर्त्तमानो द्वावपि समाहितचित्तत्वेन तुल्यावेकरूपालम्बनत्वेन सदृशौ उभयत्रापि समाहितचित्तस्यान्वयित्वेनावस्थानमेकाग्रतापरिणाम इत्युच्यते ॥ १२ ॥

१ निरोधपरिणामस्य फलमाह । तस्येति । निरोधपरिणामचित्तस्येत्यर्थः ॥
२ निरोधपरिणाममुक्त्वा समाधिपरिणाममाह । सर्वार्थेति ॥
३ तृतीयमेकाग्रतापरिणाममाह । शान्तेति । ततः पुनः शान्तोदितौ । पा० क०। ततः शान्तोदितौ-इतिभावागणेशवृत्तिसम्मतः पाठः ॥

एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः[1] ॥१३॥ शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥१४॥ क्रमान्यत्वं परिणामान्यत्वे हेतुः[2] ॥ १५ ॥

एतेन त्रिविधोक्तचित्तपरिणामेन भूतेषु स्थूलसूक्ष्मेषु इन्द्रियेषु बुद्धिकर्मभेदेन स्थितेषु धर्म्मलक्षणावस्थाभेदेन त्रिविधः परिणामो व्याख्यातोऽवगन्तव्यः। अवस्थितस्य धर्मिणः पूर्वधर्मनिवृत्तौ धर्मान्तरापत्तिर्धर्मपरिणामः। भविष्यत्त्वं विहाय वर्त्तमानत्वस्य वर्त्तमानत्वं विहायातीतत्वस्य स्वीकारो लक्षणपरिणामः। कोमलत्वादिकं विहाय कठिनत्वादेः स्वीकारोऽवस्थापरिणामः। यतश्चलगुणवृत्तिर्नापरिणममाना क्षणमप्यस्ति ॥ १३ ॥ धर्मिलक्षणमाह। शान्ताः कृतस्वस्वव्यापारा उदिताः स्वं स्वं व्यापारं कुर्वन्ति, अव्यपदेश्याः शक्तिस्वरूपेण स्थितास्तेषां शक्तिर्धर्मस्तन्त्रिविधं धर्मं योऽनुवर्त्तते स्वीकरोति स धर्मीत्युच्यते। यथा सुवर्णमनेकभूषणाकारं भवति ॥ १४ ॥ धर्माणामुक्तानां यः क्रमस्तस्य यत्प्रतिक्षणमन्यत्वं परिणामस्यान्यत्वे नानाविधत्वे हेतुर्ज्ञापकं भवति यथा मृदो घटादिः ॥ १५ ॥

१ चित्तपरिणामवद्भूतानामिन्द्रियाणां च धर्मपरिणामो लक्षणपरिणामोऽवस्थापरिणामश्चोह्नीयः परिणामत्वेन साधर्म्यात्। परिणामो व्याख्यात इति भोजवृत्तिसम्मतः पाठः ॥

२ अत्र सूत्रे क्रमपदेन क्रमिकाविर्भावका धर्मादयः प्रागुक्ता गृह्यन्ते ततश्च क्रमिकधर्मादिभेदात्परिणममानधर्म्मिभेद इति भावार्थः। यद्वा कथमेकस्य धर्मिणोऽनेके परिणामा इत्याशङ्क्य क्रमान्यत्वेन कालभेदात्सम्भवत्येकस्यानेकपरिणामयोगितेति समाहितमिति काल एवात्र क्रमशब्देनाभिधित्सितः ॥

परिणामत्रयसंयमादतीतानागतज्ञानम् ॥ १६ ॥ शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रविभाग[1]संयमात्सर्वभूतरुतज्ञानम् ॥ १७ ॥ संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम् ॥ १८ ॥ प्रत्ययस्य परचित्तज्ञानम् ॥ १९ ॥

इदानीं संयमस्य सिद्धीः प्रतिपादयति धर्मलक्षणावस्थाभेदेन यत् परिणामत्रयमुक्तं तत्र संयमात्तस्मिन्विषये पूर्वोक्तसंयमकरणादतीतानागतज्ञानं योगिनश्चेतसः शुद्धसत्त्वप्रकाशत्वाद्भूतादि सर्वं जानन्ति ॥ १६ ॥ शब्दो वर्णध्वनिरूपः, अर्थो जातिगुणक्रियादिः प्रत्ययो ज्ञानमेषामितरेतराध्यासाद्बुद्ध्येकरूपतासम्पादनात् सङ्कीर्णत्वं तेषां प्रविभागं विधाय तस्मिन् प्रविभागे यः संयमं करोति तस्य सर्वेषां मृगपश्वादीनां यद्रुतं शब्दस्तस्य ज्ञानमुत्पद्यते ॥ १७ ॥ द्विविधा वासनासंस्काराः केचित्स्मृत्युत्पादनफलाः केचिज्जात्यायुर्भोगहेतवो धर्माधर्माख्यास्तेषु संयमं यदा करोति भावनयैव पूर्ववृत्तानुसन्धानादुद्बुद्धसंस्कारः सर्वमतीतं पूर्वजन्मानुभूतजात्यादिकं प्रत्यक्षेण पश्यति ॥ १८ ॥ प्रत्ययस्य परचित्तस्य केन चिन्मुखरागादिलिङ्गेन गृहीतस्य यदा संयमं करोति तदा परकीयचित्तस्य ज्ञानमुत्पद्यते सरागं विरागं वेति ॥ १९ ॥

[1] स्तद्विभाग-इति भवदेवसम्मतः पाठः ॥

न तत्सालम्बनं तस्याविषयीभूतत्वात्[1] ॥ २० ॥ कायरूपसंयमात्तद्ग्राह्य[2]शक्तिस्तम्भे चक्षुःप्रकाशासंयोगे[3]ऽन्तर्द्धानम् ॥ २१ ॥

---

अस्यैव विशेषमाह । तस्य परस्य यच्चित्तं तत्सालम्बनं स्वकीयालम्बनेन सहितं न शक्यते ज्ञातुमालम्बनस्य केन चिल्लिङ्गेनाविषयीकृतत्वाच्च न गृहीतं तत्र संयमं कर्तुमशक्यत्वान्न भवति चित्तधर्मज्ञानं; यदि तु सालम्बनं गृहीतं तदा चित्तधर्मज्ञानं भवत्येव तत्संयमस्य कर्तुं शक्यत्वात् ॥ २० ॥ कायस्य यद्रूपं तस्य संयमाद्रूपस्य चक्षुर्ग्राह्यत्वरूपशक्त्याःस्तम्भे प्रतिवन्धे चक्षुःप्रकाशः सत्त्वधर्मस्तस्यासंयोगे तद्ग्रहणाभावे योगिनोऽन्तर्द्धानं भवति न केन चिद्दृश्यते ॥ २१ ॥

---

१ न च सालम्बनमिति क्वचित्पाठः स च भोजवृत्त्यसम्मतः । न केवलं परचित्तज्ञानमेवापि तु परकीयचित्तविषयस्यापि प्रणिधानाऽधिक्ये भवति योगिनो ज्ञानमिति भावार्थः । अक्षरार्थस्तु सविषयस्य परचित्तस्य ज्ञानविषयत्वासंभवान्निरालम्बनस्यैव ज्ञानमिति, अत्र च प्रथममेवेति शेषः । केचित्तु परचित्तस्यानुमानादिनापि ज्ञानसम्भवात्तज्ज्ञाने का योगिनो विशेषसिद्धिरत आह । न तदिति । अयमर्थः यद्यपि सुखरागादिलिङ्गेन सरागं विरागं वा परचित्तमिति शक्नोतीतरोऽप्यध्यवसितुं परं विशेषतः परचित्तविषयज्ञापकलिङ्गालाभेन योगिन एव तज्ज्ञानं नान्यस्येति । भावागणेशवृत्तौ त्वेतत्सूत्रमेव नास्ति ॥

२ संयमाद्ग्राह्य इति पा० क० ॥

३ संप्रयोगे इति पा० क० ॥

एतेन शब्दाद्यन्तर्धानमुक्तम्[1] ॥ २२ ॥ सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा ॥२३॥ मैत्र्यादिषु बलानि[2] ॥२४॥

---

एतेन रूपाद्यन्तर्द्धानोपायप्रदर्शनेन शब्दादीनां श्रोत्रादिग्राह्याणामन्तर्द्धानमुक्तं वेदितव्यम् ॥ २२ ॥ सिद्धान्तराण्याह। यत्पूर्वकृतं कर्म तद् द्विविधमेकं फलजननायोपक्रमेण कार्यकरणाभिमुख्येन सह वर्त्तत इति सोपक्रममपरमुक्तरूपविपरीतं निरुपक्रमं तस्मिन् द्विविधे कर्मणि यः संयमं करोति किं शीघ्रविपाकं किं चिरविपाकमिति एवं ध्यान दार्ढ्यादपरान्तज्ञानमुत्पद्यते अपरान्तं शरीरवियोगस्तज्ज्ञानममुष्मिन् देशे काले वा शरीरवियोगो भविष्यतीति। अरिष्टेभ्यो वा आध्यात्मिकादीनि त्रिविधान्यरिष्टानि पिहितकर्णकालिकक्रोधवायुघोषाश्रवणविकृतपुरुषदर्शनस्वर्गादियदार्थ-दर्शनानि तेभ्यः शरीरवियोगकालं जानाति। अयोगी संशयेन योगी निश्चयेन जानातीति उभयोर्भेदः ॥ २३ ॥ मैत्र्यादिषु विहितो यः संयमस्तस्य बलानि मैत्र्यादीनां सम्बन्धीनि प्रादुर्भवन्ति। मैत्र्याद्युत्कर्षे सर्वस्य मित्रत्वादिकं प्रतिपद्यते ॥ २४ ॥

---

१ भावागणेशेनैतत्सूत्रं मन्यते। भाष्येऽप्यव्याख्याततत्वाद् भाष्यरूपमेवैतत्। भोजराजेन तु व्याख्यातम् ॥

२ सर्वत्र मैत्र्यादिभावनायां सर्वसत्त्वेष्वात्मीयत्वं प्रादुर्भवतीति भावः ॥

बलेषु हस्तिबलादीनि[१] ॥ २५ ॥ प्रवृत्त्यालोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ॥२६॥ भुवनज्ञानं सूर्ये संयमात् ॥२७॥ चन्द्रे ताराव्यूहज्ञानम् ॥ २८ ॥ ध्रुवे तद्गतिज्ञानम् ॥ २९ ॥ [२] नाभिचक्रे कायव्यूहज्ञानम् ॥ ३० ॥ कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ ३१ ॥

हस्त्यादिसम्बन्धिषु बलेषु कृतसंयमस्य तद्बलानि हस्त्यादिबलानि आविर्भवन्तीत्यर्थः ॥२५॥ विषयवतीज्योतिष्मतीरूपप्रवृत्तौ य आलोकः प्रकाशस्तस्य सर्वविषयेषु न्यासात्तेषां भावनादन्तःकरणेन्द्रियेषु सूक्ष्मव्यवहितविप्रकृष्टनिधिरसायनादेर्ज्ञानमुत्पद्यते ॥ २६ ॥ सूर्ये यः संयमं करोति तस्य भूर्भुवादिसप्तभुवनज्ञानमुत्पद्यते ॥२७॥ चन्द्रे संयमात्ताराणां व्यूहः सन्निवेशस्तज्ज्ञानमुत्पद्यत इत्यर्थः ॥२८॥ ध्रुवे ज्योतिष्प्रधाने निश्चले कृतसंयमस्य तारादीनां गत्यादिज्ञानमुत्पद्यते इयं तारा, अयं ग्रहः, इयत्कालेन गच्छतीति ॥ २९ ॥ षोड़शारे नाभिचक्रे कृतसंयमस्य काये यो व्यूहो विशिष्टरसनाड्याद्यवस्थानं तस्य ज्ञानमुत्पद्यते ॥ ३० ॥ कण्ठे गले कूपो जिह्वामूलं जिह्वामूले गर्त्ताकारप्रदेशस्तत्स्पर्शात्प्राणादीनां क्षुधाद्या भवन्ति तस्मिन् कृतसंयमस्य क्षुत्पिपासादयो निवर्त्तन्ते ॥ ३१ ॥

---

१ पूर्वोक्तमेव विशदयति । बलेष्विति । यत्र क्व चिद्धस्तिबले वायुवेगे सिंहवीर्ये वाऽऽत्मीयत्वं भावयतस्तद्युक्तात्वसाविर्भवति योगिन इत्यर्थः ॥

२ बाह्याः सिद्धीः प्रतिपाद्याभ्यन्तराः प्रतिपादयितुमुपक्रमते । नाभीति ॥

कूर्मनाड्यां स्थैर्यम् ॥ ३२ ॥ मूर्द्धज्योतिषि सिद्धदर्शनम् ॥ ३३ ॥ प्रातिभाद्वा सर्वं सर्वनिमित्तानपेक्षम् [1] ॥ ३४ ॥ हृदये चित्तसंविन् ॥ ३५ ॥ सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषाद् भोगः परार्थान्यस्वार्थ [2] संयमात्पुरुषज्ञानम् ॥ ३६ ॥

कण्ठकूपस्याधस्ताद्दृढ़ा कूर्माख्या नाड़ी तस्यां कृतसंयमस्य चेतसः स्थैर्यमुत्पद्यते ॥ ३२ ॥ शिरःकपाले ब्रह्मरन्ध्राख्यं छिद्रं प्रकाशत्वाज्ज्योतिस्तस्मिन् कृतसंयमस्य सिद्धानां दर्शनं भवति ॥ ३३ ॥ ययार्थं प्रागुत्पद्यमानं ज्ञानं प्रतिभा तस्यां संयमे क्रियमाणे तारकं ज्ञानमुदेति संयमान्तरानपेक्षः सर्वं जानातीत्यर्थः ॥ ३४ ॥ हृदयपुण्डरीकान्तःकृतसंयमस्य स्वपरचित्तज्ञानमुत्पद्यते स्वपरचित्तगतं सर्वंजानातीत्यर्थः ॥ ३५ ॥ सत्त्वं प्रकाशसुखात्मकः प्राधानिकः परिणामः पुरुषो भोक्ता तयोश्चेतनाचेतनत्वादत्यन्तासंकीर्णत्वं तयोः प्रत्ययस्याविशेषाद् भेदेनाप्रतिभासनाद्या सुखसंवित्सा भोगः स पुरुषनिमित्तत्वात्परार्थः तदन्यः स्वार्थः पुरुषस्वरूपमात्रालम्बनः परित्यक्ताऽहङ्कारे सत्त्वे चिच्छायासंक्रमस्तत्र कृतसंयमस्य पुरुषज्ञानमुत्पद्यते ॥ ३६ ॥

१ सर्वनिमित्तानपेक्षमिति भाष्येऽव्याख्यातत्वात्तदंशतमपि भोजराजेन व्याख्यातम् । मनोमात्रजन्यमविसंवादि द्रागुत्पद्यमानं ज्ञानं प्रतिभा । विवेकख्यातेः पूर्वभावि ज्ञानं तारकं प्रातिभम्, यथोदेष्यति सवितरि प्राक् प्रभयैव निखिलप्रकाश एवं तारकेणैव निखलविषयप्रकाश इति भावः ॥

२ प्रत्ययाविशेषो भोगः परार्थात् स्वार्थ—इति भाष्यसंमतः पाठः ॥

ततःप्रातिभश्रावणवेदनादर्शास्वादवार्त्ता जायन्ते ॥ ३७ ॥ ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३८ ॥ बन्धकारण-शैथिल्यात् प्रचारसंवेदनाच्च [१] चित्तस्य परशरीरावेशः ॥ ३९ ॥

अस्य फलमाह । ततः पुरुषसंयमाद् व्युत्थितस्यापि ज्ञानानि-जायन्ते, तत्र प्रातिभं पूर्वोक्तं ज्ञानं, श्रावणं श्रोत्रेन्द्रियजं, वेदना स्पर्शनेन्द्रियजमादर्शश्चक्षुरिन्द्रियजं ज्ञानमास्वादो रसनेन्द्रियजं ज्ञानं वार्त्ता गन्धसंवित् सर्वत्र दिव्यत्वं विवक्षितमेतानि भवन्ति ॥ ३७ ॥ ते प्राक् प्रतिपादिताः फलविशेषाः समाधावुपद्रवा विघ्ना व्युत्थाने विशिष्टफलदायकत्वात् सिद्धयो भवन्तीत्यर्थः ॥ ३८ ॥ व्याप्यात्मचित्त-योर्नियतकर्मणा शरीरान्तर्यद्वेदनं सम्बन्धस्तस्य कारणं धर्माधर्माख्यं यदा शिथिलं भवति तस्माच्चित्तस्य यः प्रचारो हृदयाद्विषया-भिमुख्येन प्रसरस्तस्य ज्ञानाच्चित्तवहनाड्यादि यो जानाति स पर-शरीरं सजीवं मृतं वा प्रविशति सर्वं सूक्ष्मं तदनु मधुकरराजमिव मधुमक्षिकाः कर्मनाशाद्योगी सर्वत्र व्यवहरतीत्यर्थः ॥ ३९ ॥

१ प्रचर संवेदनाच्च — इति भवदेवसंमतः पाठः ॥

उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ४० ॥

समानजयात्प्रज्वलनम्[1] ॥ ४१ ॥ श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम् ॥ ४२ ॥

हृदयान्मुखनासिकाद्वारेण वायोः प्रणयनात् प्राण इत्युच्यते । नाभिप्रदेशात्पादाङ्गुष्ठपर्यन्तमपनयनादपानो नाभिप्रदेशं परिवेष्ट्य समन्तान्नयनात्समानः कृकाटिकादेशादाशिरोवृत्तेरुन्नयनादुदानः व्याप्य नयनात्सर्वशरीरव्यापी व्यान उदानस्य संयमद्वारेण जयादितरेषां वायूनां निरोधादूर्ध्वगामित्वेन जले नद्यादौ कर्दमे कण्टकादिषु वा न सज्जते अतिलघुत्वात्तूलपिण्डवज्जलादौ मज्जितोऽपि उद्गच्छतीत्यर्थः अयमुत्क्रान्तिशब्दार्थः ॥ ४० ॥ अग्निमावेष्ट्य स्थितस्य वायोः समानाख्यस्य जयाद्वशीकारादग्नेस्तेजसा प्रज्वलन्निव योगी भातीत्यर्थः ॥ ४१ ॥ श्रोत्रेन्द्रियाकाशयोः सम्बन्धो देशदेशिभावस्तस्मिन् कृतसंयमस्य योगिनो दिव्यं श्रोत्रं प्रवर्तते युगपत्सूक्ष्मव्यवहितविप्रकृष्टशब्दग्रहणसमर्थं भवतीत्यर्थः ॥ ४२ ॥

१ जयाज्ज्व—इति भाष्यभवदेवसंमतः पाठः । क्वचिद्भोजवृत्तावप्येतादृश एव पाठः ॥

कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ॥ ४३ ॥ वहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥ ४४ ॥ स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः ॥ ४५ ॥

कायः शरीरं तस्याकाशेनावकाशदानाद्यः संबन्धस्तत्र संयमं विधाय लघुनि तूलादौ समापत्तिस्तन्मयी भावलक्षणा तां च विधाय प्राप्तात्यन्तलघुभावो योगी प्रथमं भुवि यथा रुचि संचरन् क्रमेणोर्णनाभितन्तुजालेन संचरमाणः आदित्यरश्मिभिश्च विहरन् यथेष्टमाकाशेन गच्छति ॥ ४३ ॥ शरीराद्बहिर्या मनोवृत्तिः सा महाविदेहा नाम विगतशरीराहङ्कारदार्ढ्यद्वारेणोच्यते ततस्तस्यां कृतसंयमात् प्रकाशावरणक्षयः सात्त्विकचित्तस्य यः प्रकाशस्तस्य यदावरणं क्लेशादि तत्क्षयः प्रविलयो भवति ॥ ४४ ॥ एवं बहिरान्तरीः सिद्धीः प्रतिपाद्य समाद्युपयोगिनीराह । पञ्चानां भूतानां पञ्च स्थूलत्वादयो धर्मास्तत्र कृतसंयमस्य भूतजयो भवति । भूतानां दृश्यमानं विशिष्टं रूपं स्थूलं स्वरूपं कार्यं गन्धस्नेहोष्णताप्रेरणावकाशदानलक्षणम् । सूक्ष्मं तन्मात्राणि । अन्वयिनो गुणाः सर्वत्रोपलभ्यन्ते अर्थवत्त्वं नाम गुणेषु भोगापवर्गसंपादनाख्या शक्तिरेवं पञ्चसु उक्तलक्षणावस्थाभिन्नेषु प्रत्यवस्थं संयमं कुर्वन् योगी भूतजयी भवति ॥ ४५ ॥

ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च[1] ॥ ४६ ॥

रूपलावण्यबलवज्रसंहननानि[2] कायसंपत् ॥ ४७ ॥ ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ ४८ ॥

तस्य फलमाह । अणिमा अणुत्वापत्तिः महिमा महत्त्वं लघिमा लघुत्वप्राप्तिर्गरिमा गुरुत्वप्राप्तिः प्राप्तिरङ्गुल्यग्रेण चन्द्रादिस्पर्शनशक्तिः प्राकाम्यमिच्छानभिघातः शरीरान्तःकरणेश्वरत्वमीशित्वं सर्वतः प्रभविष्णुत्वं वशित्वं सर्वभूतानि तदुक्तं नातिक्रामन्ति त एते अणिमाद्याः समाध्युपयोगिभूतजयाद्योगिनः प्रादुर्भवन्ति एता महासिद्धय इत्युच्यन्ते कायसंपत् वक्ष्यमाणा तां प्राप्नोति तद्धर्मानभिघातश्च तस्य कायस्य ये धर्माः रूपादयस्तेषामनभिघातो नाशो नास्ति अस्य रूपस्याग्निवाय्वादिना दाहशोषादिकं न भवतीत्यर्थः ॥ ४६ ॥ कायसंपदमाह । रूपलावण्यबलानि प्रसिद्धानि वज्रसंहननं वज्रवत्कठिना संहतिरस्य शरीरे भवतीत्यर्थं इति कायस्याविर्भूतगुणसम्पत् ॥ ४७ ॥ इन्द्रियजयमाह । ग्रहणं विषयाभिमुखी वृत्तिः स्वरूपं सामान्येन प्रकाशत्वम् अस्मिता अहङ्कारानुगमः अन्वयार्थवत्त्वे पूर्ववत् । एतेषामिन्द्रियाणामवस्थापञ्चके संयमं कृत्वेन्द्रियजयी भवति ॥ ४८ ॥

१ संपद्धर्मा—इति पा० क० ॥
२ संहननत्वानि—इति पा० क० । संहननत्वादीनि । इतिभय देवशंकतः पाठः ॥

ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥४९॥ सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ५० ॥ तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ५१ ॥ [1]स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ॥ ५२ ॥

शरीरस्य मनोवद्गतिलाभो मनोजवित्वं कायनिरपेक्षाणामिन्द्रियाणां वृत्तिलाभो विकरणभावः सर्ववशित्वं प्रधानजयः एताः सिद्धयो जितेन्द्रियस्य प्रादुर्भवन्ति ॥ ४९ ॥ अन्तःकरणजयमाह । सत्त्वान्तःकरणे कृतसंयमस्य या उत्पद्यते सत्त्वपुरुषयोः ख्यातिर्गुणानां शिथिलीभावस्तन्माहात्म्यात्तत्र स्थितस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च समाधिर्भवति । इयं विशोका नाम सिद्धिः ॥ ५० ॥ एतस्यां विशोकायां सिद्धौ यदा वैराग्यमुत्पद्यते तदा दोषाणां रागादीनां यद्बीजमविद्यादयस्तस्य क्षये निर्मूलत्वे कैवल्यमात्यन्तिकी दुःखनिवृत्तिः ॥ ५१ ॥ तत्र समाधौ स्थित्युपायमाह । प्रधानजयस्य मधुमतीति संज्ञा तस्यां कृतसंयमस्य स्वामिनो देवा उपनिमन्त्रयितारो भवन्ति दिव्यस्त्र्यादिना तस्मिन्नुपनिमन्त्रणे नानेन सङ्गः कर्त्तव्यो नापि स्मयः सङ्गस्मयकरणे समाध्यनुत्साहोऽनिष्टप्रसङ्गः स्यात् ॥ ५२ ॥

१ स्थान्युपनिमन्त्रणे—इति पाठो भोजभवदेवभावागणेशवृत्तिषु । अपे--सङ्गस्मया—इति पा० क० ॥

क्षणतत्क्रमयोः संयमाद् विवेकजं ज्ञानम् ॥५३॥ जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ॥ ५४ ॥ तारकं सर्वविषयं सर्वथा विषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५५ ॥ सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम् ॥ ५६ ॥

इति पातञ्जले सूत्रे योगशास्त्रे तृतीयो विभूतिपादः ॥ ३ ॥

क्षणानां यः क्रमः पौर्वापर्येण परिणामस्तत्र संयमात् प्रागुक्तं विवेकजं ज्ञानमुत्पद्यते सूक्ष्मक्षणादिज्ञानात्सूक्ष्ममहदादीनां ज्ञानं भवति ॥ ५३ ॥ पदार्थानां भेदहेतवो जातिलक्षणदेशा भवन्ति तत्र जात्या भेदो यथायं गौरयं महिष इति । जात्या तुल्ययोर्लक्षणेन-भेदो यथायं गौः शुक्लोऽयमरुण इति, देशाद् यथा तुल्यपरिमाणयो-रामलकयोर्भिन्नदेशावस्थितयोर्यत्र भेदो न ज्ञायते तत्रापि कृतसंयमस्य ज्ञानमुपजायते उभयोर्भेदप्रतिपत्तिर्भवत्येव ॥ ५४ ॥ उक्तसंयमबलादन्त्य-भूमिकोत्पन्नं ज्ञानं संसारोत्तारणात्तारकमित्युच्यते सर्वाणि महदा-दीनि विषया यस्येति सर्वविषयं तत्त्वानां स्थूलाद्यवस्थाविषयत्वात् सर्वथा विषयमतीतादित्रिविषयत्वात् अक्रमं नाम भाव्यपि विद्यमानत्वेन पश्यति ॥ ५५ ॥ उक्तलक्षणयोः सत्त्वपुरुषयोः शुद्धिसाम्येऽपि सत्त्वस्य कर्तृत्वनिवृत्त्या स्वकारणे लयः पुरुषस्योपचरितभोगनिवृत्त्या कैवल्यं मोक्षो भवतीत्यर्थः ॥ ५६ ॥

इति योगचन्द्रिकायां तृतीयो विभूतिपादः ॥ ३ ॥

१ रन्यत्वानवच्छे—इति भवदेवसंमतः पाठः ॥

जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥ जात्यन्तरपरिणामः प्रकृत्यापूरणात्[1] ॥ २ ॥ [2]निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥

---

कैवल्याख्यं चतुर्थपादमाह । तत्र सिद्धीनामनेकजत्वं सूचयति काश्चन जन्मत एव यथा कपिलादीनाम्, औषधिसिद्धयः पारदादयः मन्त्रसिद्धिराकाशगमनादि । तपःसिद्धिर्विश्वामित्रादीनां समाधिजाः प्राक् प्रतिपादिताः ॥ १ ॥ योऽयमस्मिञ्जन्मनि जात्यन्तरपरिणामः स प्रकृत्यापूरणात् पाश्चात्यजन्मप्रकृतयोऽस्मिन् जन्मनि विकारानापूरयन्ति ॥ २ ॥ निमित्तं धर्मादि तन्न प्रयोजकं प्रकृतीनां परिणामे कुतस्तस्य धर्मादेर्व्यापार इत्याह । वरणभेद इति । ततोऽनुष्ठीयमानधर्मादेर्वरणभेदो वरणमावरकमधर्मादि तस्यैव विरोधित्वाद्भेदः क्षयः क्रियते । यथा क्षेत्रिकः कृषीवल, केदारात्के दारान्तरे जलानयनार्थं प्रतिबन्धावरणभेदमात्रं करोति तद्वत् ॥ ३ ॥

---

१ भापभोजभवदेवभावागणेशवृत्तिषु, प्रकृत्यापूरात्—इत्येव पाठः। ततश्च नन्दीश्वरादीनामिहैव परिदृश्यमानस्य जात्यादिपरिणामस्य जन्मान्तरीयसमाधिजन्यत्वमव्याहतम् ॥

२ ननु धर्मादीनां लोकप्रसिद्धं हेतुत्वमनुपपन्नमत आह० निमित्तमप्रयोजकमिति । प्रतिबन्धकाभावसंपादकतयैव धर्मादीनां लोकप्रसिद्धहेतुत्वोपपत्तिरिति तात्पर्यम् ॥

निर्माणचित्तान्यस्मितामात्रात्[1] ॥ ४ ॥ प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥ तत्र ध्यानजमनाशयम् ॥ ६ ॥ कर्माशुक्लाकृष्णं[2] योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥

---

योगी अनेकशरीराणि युगपत्सृजतीत्याह । योगिनः स्वयं निर्मितेषु कायेषु यानि चित्तानि तानि मूलकारणादस्मितामात्रात् प्रसरन्ति अग्नेर्विस्फुलिङ्गा इव ॥ ४ ॥ चेतसां प्रवृत्तिभेदे व्यापारनानात्वे एकं योगिनश्चित्तं प्रयोजकमधिष्ठातृत्वेन प्रेरकं तेन न भिन्नं तत्त्वम् ॥ ५ ॥ जन्मप्रभवाच्चित्तात्समाधिप्रभवस्य वैलक्षण्यमाह । ध्यानजं समाधिजं यच्चित्तं तज्जन्मजादिषु पञ्चसु मध्ये अनाशयं कर्मवासनारहितमित्यर्थः ॥ ६ ॥ शुभफलदं यागादिकर्म शुक्लमशुभफलदं ब्रह्महत्यादि कृष्णमुभयसङ्कीर्णं शुक्लकृष्णं तत्र शुक्लं दानादिमतां कृष्णं नारकिणां शुक्लकृष्णं मनुष्याणां योगिनां संन्यासवतामशुक्लाकृष्णं क्रियमाणं कर्म फलत्यागानुसन्धानेनानुष्ठानान्न किञ्चित्फलमारभते ॥ ७ ॥

---

१ अत्र आद्यजन्मभावस्थूलनिर्माणशब्दस्य चित्तपदेन सम्बन्धीति योगविभागादिना समस्यन्तस्य,कर्मधारयो वा समासः । बाहुलकात्कर्मणि वा ल्युट् । तदनुसारेण चन्द्रिकायामपि क्वचित् स्वयं निर्मितानि यानि चित्तानीत्येव पाठः ॥

२ कर्माशुक्लाकृष्णं — इति भाष्यसंमतः पाठः ॥

[१]ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥

जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥

अस्यैव कर्मणः फलमाह ॥ द्विविधवासनामध्ये जात्यायुर्भोगफलाः पूर्वं कृतनिर्णयाः । यास्तु स्मृतिफलास्ततः कर्मणो यादृक् शरीरमारब्धं देवादि तस्य विपाकस्य या अनुगुणा अनुरूपा वासनास्तासामेव तस्मादभिव्यक्तिर्वासनानां भवति ॥ ८ ॥ आसां कार्यकारणभावानुपपत्तिं निराकरोति इह कां चिद्योनिमनुभूय यदा योन्यन्तरसहस्रव्यवधानेन तामेव पुनर्योनिं प्रतिपद्यते तत्र या वासनाः प्रकटीभूताः आसंस्तास्तथाविधव्यञ्जकाभावात्तिरोभूताः पुनस्तादृक्शरीरलाभे प्रकटीभवन्ति॥ जातिदेशकालव्यवधानेऽपि तासां स्वानुरूपस्मृत्यादिफलसाधने आनन्तर्यं नैरन्तर्यं कुतः स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥

१ कर्मणः कर्मविपाकानुरूपाणामेव वासनानामभिव्यक्तिरिति योगिनामशुक्लकृष्णकर्मानुरूपाऽशुक्लकृष्णैव वासनाऽभिव्यक्ता भवति इतरेषां शुक्ला कृष्णा शुक्लकृष्णा वेति भावः ॥

तासामनादित्वं चाशिषो[1] नित्यत्वात् ॥ १० ॥ हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥ ११ ॥ अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्[2]धर्माणाम् ॥ १२ ॥ ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥

वासनानां यदा प्रथममेवानुभवस्तदा किं स सनिमित्त उतानिमित्त इति शङ्कामपनयति तासां वासनानामनादित्वं न विद्यते आदिर्यस्य तस्य भावस्तत्त्वं कुत इत्यत आह । आशिषो नित्यत्वात् येयमाशीर्महामोहरूपा सुखसाधनं मे भूयान्न कदाचित्तेन वियोग इत्येवं रूपसङ्कल्पो वासनाकारणं तस्य नित्यत्वात् ॥ १० ॥ आसां हानोपायमाह । वासनानामनन्तरानुभवो हेतुस्तस्याप्यनुभवस्य रागादयस्तेषामविद्येति साक्षात्पारम्पर्येण च हेतुः फलं शरीरादि आश्रयो बुद्धिसत्त्वमालम्बनं यदेवानुभवस्य तैरनन्तानां वासनानां संगृहीतत्वात्तेषामभावे वासनाऽभावः ॥ ११ ॥ सतामभावासंभवादसतां चोत्पत्त्यसंभवात्तैर्धर्मैर्विपरिणममानो धर्मी एकरूपो धर्मास्त्वनेके तस्माद्धर्माणामतीतानागताद्यध्वभेदस्तस्मादपवर्गपर्यन्तमेकमेव चित्तं धर्मि ॥ १२ ॥ धर्मधर्मिणो व्यक्तसूक्ष्मसत्त्वादिगुणपरिणामरूपाः ॥ १३ ॥

१ भाष्यप्रभवदेवभावागणेशवृत्तिषु --त्वं चाशिषो — इति पाठः ॥

२ स्वरूपतोऽध्वभेदा — इति पा० क० ॥ स्वरूपं नास्त्यध्वभेदा — इति पा० क० भोजवृत्तौ ॥

जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥ जात्यन्तरपरिणामः प्रकृत्यापूरणात्[1] ॥ २ ॥ [2]निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥

कैवल्याख्यं चतुर्थपादमाह । तत्र सिद्धीनामनेकजत्वं सूचयति काश्चन जन्मत एव यथा कपिलादीनाम्, ओषधिसिद्धयः पारदादयः मन्त्रसिद्धिराकाशगमनादि । तपःसिद्धिर्विश्वामित्रादीनां समाधिजाः प्राक् प्रतिपादिताः ॥ १ ॥ योऽयमस्मिञ्जन्मनि जात्यन्तरपरिणामः स प्रकृत्यापूरणात् पाश्चात्यजन्मप्रकृतयोऽस्मिन् जन्मनि विकारानापूरयन्ति ॥ २ ॥ निमित्तं धर्मादि तत्र प्रयोजकं प्रकृतीनां परिणामे कुतस्तस्य धर्मादेर्व्यापार इत्याह । वरणभेद इति । ततोऽनुष्ठीयमानधर्मादेर्वरणभेदो वरणमावरकमधर्मादि तस्यैव विरोधित्वाद्भेदः क्षयः क्रियते । यथा क्षेत्रिकः कृषीवल, केदारात्केदारान्तरे जलानयनार्थं प्रतिबन्धावरणभेदमात्रं करोति तद्वत् ॥ ३ ॥

१ भाष्यभोजभवदेवभावागणेशवृत्तिषु, प्रकृत्यापूरात्—इत्येव पाठः। ततश्च नन्दीश्वरादीनामिहैव परिदृश्यमानस्य जात्यादिपरिणामस्य जन्मान्तरीयसमाधिजन्यत्वमव्याहतम् ॥

२ ननु धर्मादीनां लोकप्रसिद्धं हेतुत्वमनुपपन्नमत आह॰ निमित्तमप्रयोजकमिति । प्रतिबन्धकाभावसंपादकतयैव धर्मादीनां लोकप्रसिद्धहेतुत्वोपपत्तिरिति तात्पर्यम् ॥

निर्माणचित्तान्यस्मितामात्रात्[1] ॥ ४ ॥ प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥ तत्र ध्यानजमनाशयम् ॥ ६ ॥ कर्माशुक्लकृष्णं[2] योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥

---

योगी अनेकशरीराणि युगपत्सृजतीत्याह । योगिनः स्वयं निर्मितेषु कायेषु यानि चित्तानि तानि मूलकारणादस्मितामात्रात् प्रसरन्ति अग्नेर्विस्फुलिङ्गा इव ॥ ४ ॥ चेतसां प्रवृत्तिभेदे व्यापारनानात्वे एकं योगिनश्चित्तं प्रयोजकमधिष्ठातृत्वेन प्रेरकं तेन न भिन्नं तत्त्वम् ॥ ५ ॥ जन्मप्रभवाच्चित्तात्समाधिप्रभवस्य वैलक्षण्यमाह । ध्यानजं समाधिजं यच्चित्तं तज्जन्मजादिषु पञ्चसु मध्ये अनाशयं कर्मवासनारहितमित्यर्थः ॥ ६ ॥ शुभफलदं यागादिकर्म शुक्लमशुभफलदं ब्रह्महत्यादि कृष्णमुभयसङ्कीर्णं शुक्लकृष्णं तत्र शुक्लं दानादिमतां कृष्णं नारकिणां शुक्लकृष्णं मनुष्याणां योगिनां संन्यासवतामशुक्लाकृष्णं क्रियमाणं कर्म फलत्यागानुसन्धानेनानुष्ठानान्न किञ्चित्फलमारभते ॥ ७ ॥

---

१ अत्र आद्यन्तभावव्युत्पन्ननिर्माणशब्दस्य चित्तपदेन षष्ठीति योगविभागादिना षष्ठ्यन्तस्य कर्मधारयो वा समासः । बाहुलकात्कर्मकरणे वा ल्युट् । तदनुसारेण चन्द्रिकायामपि क्वचित् स्वयं निर्मितानि यानि चित्तानीत्येव पाठः ॥

२ कर्माशुक्लाकृष्णं – इति भाष्यसंमतः पाठः ॥

ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥

जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥

अस्यैव कर्मणः फलमाह ॥ द्विविधवासनामध्ये जात्यायुर्भोगफलाः पूर्वं कृतनिर्णयाः । यास्तु स्मृतिफलास्ततः कर्मणो यादृक् शरीरमारब्धं देवादि तस्य विपाकस्य या अनुगुणा अनुरूपा वासनास्तासामेव तस्मादभिव्यक्तिर्वासनानां भवति ॥ ८ ॥ आसां कार्यकारणभावानुपपत्तिं निराकरोति इह कां चिद्योनिमनुभूय यदा योन्यन्तरसहस्रव्यवधानेन तामेव पुनर्योनिं प्रतिपद्यते तत्र या वासनाः प्रकटीभूताः आसंस्तास्तथाविधव्यञ्जकाभावात्तिरोभूताः पुनस्तादृक् शरीरलाभे प्रकटीभवन्ति॥ जातिदेशकालव्यवधानेऽपि तासां स्वानुरूपस्मृत्यादिफलसाधने आनन्तर्यं नैरन्तर्यं कुतः स्मृतिसंस्कारयोरेकरूपत्वात् ॥ ९ ॥

१ कर्मणः कर्मविपाकानुरूपाणामेव वासनानामभिव्यक्तिरिति योगिनामशुक्लकृष्णकर्मानुरूपाऽशुक्लकृष्णैव वासनाऽभिव्यक्ता भवति इतरेषां शुक्ला कृष्णा शुक्लकृष्णा वेति भावः ॥

तासामनादित्वमाशिषो[1] नित्यत्वात् ॥ १० ॥ हेतुफलाश्रया-लम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥ ११ ॥ अतीता-नागतं स्वरूपतोऽस्त्यध्वभेदा[2]द्धर्माणाम् ॥ १२ ॥ ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥

---

वासनानां यदा प्रथममेवानुभवस्तदा किं स सनिमित्त उतानिमित्त इति शङ्कामपनयति तासां वासनानामनादित्वं न विद्यते आदिर्यस्य तस्य भावस्तत्त्वं कुत इत्यत आह । आशि-षो नित्यत्वात् येयमाशीर्महामोहरूपा सुखसाधनं मे भूयान्न कदा चित्तेन वियोग इत्येवं रूपसङ्कल्पो वासनाकारणं तस्य नित्यत्वात् ॥ १० ॥ आसां हानोपायमाह । वासनानामन्तरानुभवो हेतुस्तस्याप्यनुभवस्य रागादयस्तेषामविद्येति साक्षात्पारम्पर्येण च हेतुः फलं शरीरादि आश्रयो बुद्धिसत्त्वमालम्बनं यदेवानुभवस्य तैरनन्तानां वासनानां संगृ-हीतत्वात्तेषामभावे वासनाऽभावः ॥ ११ ॥ सतामभावासंभवादसतां चोत्पत्त्यसंभवात्तैर्धर्मैर्विपरिणममानो धर्मी एकरूपो धर्मास्त्वनेके तस्माद्धर्माणामतीतानागताद्यध्वभेदस्तस्मादपवर्गपर्यन्तमेकमेव चित्तं धर्मि ॥ १२ ॥ धर्मधर्मिणो व्यक्तसूक्ष्मसत्त्वादिगुणपरिणामरूपाः ॥ १३ ॥

---

१ भाष्यप्रभवदेवभावागणेशवृत्तिषु --त्वं चाशिषो—इति पाठः ॥

२ स्वरूपतोऽध्वभेदा—इति पा० क० ॥ स्वरूपं नास्त्यध्वभेदा—इति पा० क० भोजवृत्तौ ॥

परिणामैकत्वाद्वस्तुतत्त्वम् ॥ १४ ॥ वस्तुसाम्ये चित्तभेदात्तयोर्विविक्तः[1] पन्थाः ॥ १५ ॥ [2]तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ १६ ॥ सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामात् ॥ १७ ॥

धर्म्यैकत्वमाह । यद्यपि गुणास्त्रयस्तथापि तेषा मङ्गाङ्गित्वाद्वस्तुनस्तत्त्वमेकत्वम् । यथेदं पृथिवीत्यादिवत् ॥ १४ ॥ वस्तुनो ज्ञानैकत्वे कथमेतदित्याह । तयोर्ज्ञानज्ञेययोर्विविक्तः पन्थाः कथं वस्तुसाम्ये चित्तभेदात् स्त्र्यादिवस्त्वेकत्वे प्रमातॄणां सुखादिनानारूपचित्तपरिणामात् ॥ १५ ॥ चित्तं कथं युगपत्सर्वार्थान्न गृह्णातीत्याशङ्क्य परिहरति । तस्यार्थस्योपरागादाकारसमर्पणाच्चित्ते बाह्यवस्तु ज्ञातमज्ञातञ्च भवतीत्यर्थः ॥ १६ ॥ पुरुषस्य परिणामित्वमाशङ्क्य परिहरति । याश्चित्तवृत्तयस्तास्तत्प्रभोस्तस्य चित्तस्य ग्रहीतुः पुरुषस्य सदा सर्वकालमेव ज्ञेयाः तस्य चिद्रूपतयाऽपरिणामात् ॥ १७ ॥

१ विभक्तः — इति भाष्यसंमतः पाठः ॥ वस्तुसाम्ये एकस्मिन्नपि वस्तुनि, चित्तभेदात् नानाविधज्ञानात्, तयोः ज्ञानविषययोः, विविक्तः पन्थाः भेद इत्यर्थः, विषयाणां ज्ञानस्वरूपत्वे अनेकपुरुषविविधज्ञानभास्यत्वमेकस्य धर्मिणोऽनुपपन्नं स्यादिति ज्ञानाद्भिन्ना एव विषया इति भावः ॥

२ भाष्यभावागणेशवृत्त्योस्तु—नचैकचित्ततन्त्रं वस्तु तत्प्रमाणकं तदा किं स्यात् । इतिषोडशं सूत्रं ततस्तदुपेति सप्तदशम् ॥

न तत्स्वाभासं दृश्यत्वात् ॥१८॥ एकसमये चोभयानवधारणम्
॥१९ चित्तान्तरदृश्ये[1] बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसंकरश्च ॥ २० ॥
चितेरप्रतिसंक्रमायास्तदाकारापत्तौ[2] स्वबुद्धिसंवेदनम् ॥२१॥

ननु चित्तं स्वप्रकाशमस्तु किंग्रहीत्रन्तरकल्पनेनेत्याशङ्कां परिहरति। तच्चित्तं स्वाभासं स्वप्रकाशकं न भवति किन्तु पुरुषवेद्यं कुतो दृश्यत्वात् ॥ १८ ॥ बुद्धेरसंवेदने रागादयो नोपपन्ना इत्याशङ्कां निरसितुमाह एकस्मिन्काले उभयस्य स्वरूपस्य अर्थस्य चावधारयितुमशक्यत्वाच्चित्तं न स्वप्रकाशम् ॥ १९ ॥ तर्हि बुद्ध्यन्तरेणास्तु ग्रहणमित्याशङ्क्याह। यदि बुद्धिर्बुद्ध्यन्तरेण वेद्येत तस्या अपि बुद्धित्वाद्बुद्ध्यन्तरमित्यनवस्था-नादर्थप्रत्यक्षं न स्यात्, स्मृतीनां रूपादिस्मृतीनां संकरश्च किंविषयिणी स्मृतिरिति न ज्ञायते ॥ २० ॥ सिद्धान्तमाह । न विद्यते प्रतिसंक्रमोऽन्यत्र गमनं यस्याः साऽप्रतिसंक्रमा तस्याश्चितेः पुरुषस्य सदैकरूपत्वात् सन्निधौ बुद्धिस्तदाकार-तामापद्यते चिच्छक्तिर्बुद्धिविशिष्टतया संपद्यते यदा तदा बुद्धेः स्वस्यात्मनो वेदनं भवतीत्यर्थः ॥ २१ ॥

१ भावागणेशवृत्तौ —चित्तान्तरग्राह्य, इति पाठः ॥
२ तदा रागापत्तौ—इति पा० क० ॥

द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २२ ॥ तदसंख्येयवासनाभिश्चित्रमपि[1] परार्थं संहत्यकारित्वात् ॥ २३ ॥ विशेषदर्शिन[2] आत्मभावभावनानिवृत्तिः[3] ॥ २४ ॥

द्रष्टा पुरुषस्तेनोपरक्तं तदाकारतामिव प्राप्तं, दृश्योपरक्तं विषयाकारपरिणामं यदा भवति तदा तदेव सर्वार्थग्रहणसमर्थं जायते ॥ २२ ॥ प्रद्रष्टरि प्रमाणमाह । तदेव चित्तं संख्यातुमशक्याभिर्वासनाभिश्चित्रमपि नानारूपमपि परार्थं परस्य स्वामिनो भोक्तुर्भोगापवर्गलक्षणार्थं साधयति, कुतः संभूय मिलित्वार्थक्रियाकारित्वात् यथा गृहादिः ॥ ॥ २३ ॥ इदानीं कैवल्यं निर्णेतुं दश सूत्राणि । एवं सत्त्वपुरुषयोरन्यत्वे साधिते यस्तयोर्विशेषं पश्यति अहमस्मादन्य इत्येवंरूपं तस्य ज्ञातचित्तस्वरूपस्य चित्ते यात्मत्वभावना सा निवर्त्तते चित्तमेव कर्तृ ज्ञातृ भोक्तृ इत्यभिमानो निवर्त्तते ॥ २४ ॥

१ तदसंख्येयं वासनाभिश्चित्रमपि—इति भवदेवसंमतः पाठः ॥
२ विशेषदर्शिनि—इति भवदेवसंमतः पाठः॥
३ विनिवृत्तिः—इति पाठः क्वचित् ॥

तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥२५॥ तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २६ ॥ हानमेषां क्लेशवदुक्तम् ॥२७॥

तस्मिन्सति किं भवतीत्याह । तदेति । यदस्याज्ञाननिम्नं बहिर्मुखं विषयभोगफलं चित्तमासीत्तदिदानीं विवेकनिम्नं विवेकमार्गमन्तर्मुखं कैवल्यप्राग्भारं कैवल्यफलं कैवल्यप्रारम्भं वा संपद्यत इति ॥ २५ ॥ अस्मिंश्च विवेकवाहिनि चित्ते येऽन्तरायाः प्रादुर्भवन्ति तेषां हेतुप्रतिपादनद्वारेण त्यागोपायमाह । तच्छिद्रेष्विति । तस्मिन्समाधौ स्थितस्य छिद्रेष्वन्तरालेषु यानि प्रत्ययान्तराणि व्युत्थानरूपाणि ज्ञानानि तानि प्राक्तनेभ्यो व्युत्थानानुभवजेभ्यः संस्कारेभ्योऽहं ममेत्येवंरूपाणि क्षीयमाणेभ्योऽपि प्रभवन्ति अतः कारणोच्छित्तिद्वारेण तेषां हानं कर्त्तव्यमित्युक्तं भवति ॥ २६ ॥ हानोपायः पूर्वमेवोक्त इत्याह । हानमिति । यथा क्लेशानामविद्यादीनां हानं पूर्वमुक्तं तथा संस्काराणामपि कर्त्तव्यम् यथा ते ज्ञानाग्निना प्लुष्टा दग्धबीजकल्पा न पुनश्चित्तभूमौ प्ररोहं लभन्ते तथा संस्कारा अपि ॥ २७ ॥

प्रसंख्यानेऽप्यकुसीदस्य[१] सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ २८ ॥ ततः क्लेशकर्मनिवृत्तिः ॥ २९ ॥ तदा सर्वावरणापेतस्य[२] ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥ ३० ॥

एवं प्रत्ययान्तरानुदयेन स्थिरीभूते समाधौ यादृशस्य योगिनः समाधिप्रकर्षप्राप्तिर्भवति तथाविधमुपायमाह । प्रसंख्यानं यावतां तत्त्वानां यथाक्रमं व्यवस्थितानां परस्परविलक्षणस्वरूपपरिभावनं तस्मिन्सत्यकुसीदस्य फलमलिप्सोः प्रत्ययान्तराणामनुदये सर्वप्रकार-विवेकख्यातेः परिशेषाद्धर्ममेघः समाधिर्भवति प्रकृष्टमशुक्ल-कृष्णं धर्मं परपुरुषार्थसाधकं मेहति सिञ्चतीति धर्ममेघः । अनेन प्रकृष्टस्य धर्मस्यैव ज्ञानहेतुत्वमित्युपपादितं भवति ॥ २८ ॥ तस्माद्धर्ममेघात्किं भवतीत्यत आह । तत इति । क्लेशा-नामविद्यादीनामभिनिवेशान्तानां कर्मणां च शुक्लादिभेदेन त्रिविधानां ज्ञानोदयात् पूर्वपूर्वकारणनिवृत्त्या निवृत्तिर्भव-तीत्यर्थः ॥ २९ ॥ निवृत्तेषु किं भवतीत्यत आह । तदेति ॥ आव्रियते चित्तमेभिरित्यावरणानि क्लेशास्तेभ्योऽपेतस्य तद्रहितस्य ज्ञानस्य शरद्गगनप्रतिमस्यानन्त्यादनवच्छेदाज्ज्ञेयमल्पं गणनास्पदं भवति अक्लेशेनैव सर्वज्ञानातीत्यर्थः ॥ ३० ॥

१ कुसीदशब्दस्तालव्यमध्यो दन्त्यमध्यो वा । भवदेवदत्तौ —सर्वथा— इति नैवास्ति ॥
२ सर्वावरणमलापेत —इति पा० क० ॥

कृतार्थानां[1] परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३१ ॥ क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३२ ॥

ततः किमित्यत आह। कृतार्थानामिति। कृता निष्पादितो भोगापवर्गलक्षणः पुरुषार्थो यैस्ते कृतार्था गुणाः सत्त्वरजस्तमांसि तेषां परिणामः आपुरुषार्थसमाप्तेरानुलोम्येन प्रातिलोम्येन चाऽङ्गाऽङ्गिभावस्थितिलक्षणस्तस्य योऽसौ क्रमो वक्ष्यमाणस्तस्य परिसमाप्तिर्निष्ठा न पुनरुद्भवतीत्यर्थः ॥ ३१ ॥ क्रमस्योक्तस्य लक्षणमाह। क्षणोऽल्पीयान कालस्तस्य योऽसौ प्रतियोगी एकक्षणविलक्षणः परिणामोऽपरान्तनिर्ग्राह्यः अनुभूतेषु क्षणेषु पश्चात्सङ्कलनबुद्ध्यैव यो गृह्यते स क्षणानां क्रम उच्यते। न ह्यननुभूतेषु क्षणेषु क्रमः परिज्ञातुं शक्यः ॥ ३२ ॥

१ ततः कृतार्थानां—इति भाष्यभावागणेशसंमतः पाठः॥

पुरुषार्थशून्यानां[1] प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३३ ॥

इति श्रीपतञ्जलिसूत्रे योगशास्त्रे चतुर्थः कैवल्यपादः ॥ ४ ॥

---

इदानीं फलभूतस्य कैवल्यस्यासाधारणं स्वरूपमाह । पुरुषार्थेति । समाप्तभोगापवर्गलक्षणपुरुषार्थानां गुणानां यः प्रतिप्रसवः प्रतिलोमपरिणामस्य समाप्तौ विकारानुद्भवो यदि वा चितिशक्तेर्वृत्तिसारूप्य निवृत्तौ स्वरूपमात्रेणावस्थानं तत्कैवल्यमुच्यते । न केवलमस्मद्दर्शने क्षेत्रज्ञः कैवल्यावस्थायामेवं भूतो दर्शनान्तरेष्वपि विमृश्यमाण एवंरूप एवावतिष्ठते यस्माच्छास्त्रान्तरेष्वप्येवमेव निश्चयस्तस्मादिदमेव युक्तं वृत्तिसारूप्यपरिहारेण स्वरूपप्रतिष्ठा चितिशक्तेः कैवल्यमिति । तदेवं सिद्ध्यन्तरेभ्यो विलक्षणा सर्वसिद्धिमूलभूता समाधिसिद्धिः सैव साधनीयेति ॥ ३३ ॥ सूत्रार्थवृत्तिमालोच्य कृतेयं पदचन्द्रिका ॥[2] अनन्तेनेश्वरप्रीत्यै चार्पिता शिवपादयोः ॥ १ ॥ इति योगचन्द्रिकायां चतुर्थः कैवल्यपादः ॥ ४ ॥ कल्याणमस्तु ॥

---

१ शून्यानां गुणानां — इति पा० क० ॥

२ पदचन्द्रिकेति तत्त्वं नाम, योगचन्द्रिकेति तु प्रसिद्ध्यनुसारात्, पादान्तेषु तथा लेखाच्च ॥